THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 8*

---

EDITED BY

GOPĪ NĀTHA KAVIRĀJA

---

THE

# KĀVYA ḌĀKINĪ

---

*Printed by*

JAI KRISHNA DASS GUPTA,

at the Vidya Vilas Press, Benares

1924

मैथिलश्रीगङ्गानन्दकवीन्द्ररचिता—

# काव्यडाकिनी



THE

# KĀVYA DĀKINĪ

OF

## GAṄGĀNANDA KAVĪNDRA

EDITED WITH INTRODUCTION ETC

BY

P. Jagannātha Śāstrī Hoshing Sāhityopādhyāya,

&

P Anantarāma Śāstrī Vetāl,

Sadho Lal Scholars, Govt Sanskrit Library,

Sarasvatī Bhavana, Benares

---

1924

# INTRODUCTION

The following pages embody the text of a Sanskrit work on 'dosa' ( poetical blemishes ) by one Gangā-nanda Kavīndra, an inhabitant of Tīrabhukta or Mithilā. It is the only Sanskrit work, so far known, devoted exclusively to an exposition of this topic

The work is divided into five chapters, each called by the name of 'Drsti' The first chapter deals with the definition of 'dosa' and its classification The definition of the 'verbal faults' ( शब्दगतदोष ) has been examined and illustrated The remainig chapters treat respectively, in a similar manner, of the faults of aspects of words, of sentences, of meanings and of *rasa* In the last chapter there appears also a discussion as to when a *dosa* is regarded as a *guna*, when its does not involve any defect at all, or when it is neutral so that it can not be treated either as a guṇa or as a dosa

The author, whose name appers as Gangānanda in the colophon, was a Maithil Brahman, being the younger brother of one Raghunātha to whom he refers (p 37). Nothing is known about his parentage He was a protége of Mahārāja Karṇa of Bikaner The reign of Karṇa–Śrī Lui Karna Deva–, son of Maharāja Bikāji is generally assigned to 1506–1527 A D Hence Gangā-nanda may be rightly placed in the beginning of the

Apart from the work, herewith published, the following works are also attributed to the same author:

(1) Karṇabhūṣaṇa* ( on *Rasa* ),

(2) Bhṛṅgadūta† ( a poem ), and

(3) Mandāramañjarī ‡ ( a drama )

The present edition of *Kāvyaḍākinī* is based on a single Ms, belonging originally to P Mukunda S'āstrī and now obtained for the Government Sanskrit Library, Sarasvatī Bhavana, Benares Leaves, 1–29 Size, 9-6″ × 3 6″ inches Lines 10 in a page, and letters 40 in a line Material, country-made paper Script, Nāgarī, Date, Samvat 1748 (= 1691 A D) Transcribed by Mahādeva (Puntamkar) Generally correct The colophon at the end of the Ms runs thus वसु श्रीजनिद्विपभूमिमितेब्दे १७४८ द्वितीया दिने पौष मासस्य कृष्णे । शुभे माथुरेमण्डले रम्यलोक महादेवनामाऽलिखद् ग्रन्थमेतम् । श्रीमहासिद्धेश्वर्यै नमः ।

---

*This book was edited in the Kāvyamālā, no 79, by P Bhavadatta and Mr Parab in 1902 The work is said by the author to have been undertaken at the instance of his patron

†Cf Aufrecht, Cat. Cat., Vol. III, p 30.

‡Referred to in the Kāvyaḍākinī, p 44 This work is to be distinguished from another work of the same name, attributed to Vis'ves'vara Sūri

Sarasvatī Bhavan Library, Benares March 31, 1924. } Jagannath S'astri Hoshing

# शुद्धिपत्रम् ।



| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रतिवध्यतानि० | प्रतिबध्यतानि० | १ | २१ |
| नेयार्थल्किष्टते | नेयार्थक्लिष्टते | २ | १२ |
| तात्पर्यविषय० | तात्पर्यविषय० | ३ | २३ |
| सत्कुर्वन्ति | सत्कुर्वन्ति | ३ | २५ |
| इति । यद्यपि | इति यद्यपि | ४ | १ |
| प्रियज्योत्स्नी | प्रिय ! ज्योत्स्नी | ५ | २० |
| यन्तृनिभास्तव । | यन्तृनिभास्तव । | ६ | २६ |
| स्पर्शतापि ते | स्पर्शतापिते | ७ | ६ |
| ल्किष्टमाह तत् | क्लिष्टमाह तत् | ८ | ७ |
| बाह्येनिद्रय० | बाह्येन्द्रिय० | ९ | ८ |
| पथा | यथा | १० | ७ |
| शब्दैरेनेकरैन्व० | शब्दैरनेकैरन्व० | ११ | १२ |
| विटप्रवृत्तिशब्दौ | विट्प्रवृत्तिशब्दौ | १२ | २७ |
| परिधेहि सुलोचने | परिधेहि सुलोचने ! | १३ | १२ |
| नायकःप्राप्त० | नायकः प्राप्त० | १३ | २४ |
| किमस्यभूया० | किमस्य भूया० | १४ | २० |
| वात्तत्कथ० | वात्कथ० | १५ | ३ |
| प्रतिपतिः । | प्रतिपत्तिः । | १६ | ८ |
| तस्मावङ्कमिद | तस्मादङ्कमिदं | २१ | २४ |
| ॥ १ | (१) ॥ | २३ | २३ |
| द्वितीय र्धे | द्वितीयार्धे | ३० | ७ |
| न्यूनपदेवाचक० | न्यूनपदे वाचक० | ३० | १० |
| व्याहतम् । | व्याहतत्वम् । | ३३ | १६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| 'रेरे दशास्य' | 'रे रे दशास्य' | ३४ | ९ |
| न पुरङ्कुरोद्गमः। | न पुनरङ्कुरोद्गमः। | ३६ | २३ |
| निजगृहाद्दुष्टेन | निजगृहाद् दुष्टेन | ३९ | ४ |
| वधिपुरी | वधि पुरी | ३९ | १५ |
| न न्वेवं | नन्वेवं | ४० | १२ |
| निश्चेष्टयाऽचष्ट | निश्चेष्टयाऽऽचष्ट | ४५ | ११ |
| अस्फुट | अस्फुटं | ४६ | २० |
| 'नीलरूपभृत' | 'नीलरूपभृतः' | ४७ | ९ |
| भग्नक्रप्रमतां | भग्नप्रक्रमतां | ४७ | १२ |
| इति। 'काकाक्षिगोलक'० | इति 'काकाक्षिगोलक'० | ५० | १६ |
| क्रूराक्रान्तिसमद्भव० | क्रूराक्रान्तिसमुद्भव० | ५० | २३ |
| पक्षेपाथोज० | पक्षे पाथोज० | ५१ | १४ |
| निर्वाणवैरिदहनाः | निर्वाणवैरदहनाः | ५१ | २० |
| रूपे दुग्धदधि० | रूपैर्दुग्धदधि० | ५३ | २३ |
| सहसां | सहसा | ५३ | २४ |
| धवलाकुर्वन्ति | धवलीकुर्वन्ति | ५३ | २४ |
| कृतारचना | कृता रचना | ५४ | ८ |
| स्निग्धे! | स्निग्धे | ५४ | १३ |
| य शः | यशः | ५४ | २२ |
| कान्ताऽऽलाम्बि | कान्ताऽऽलम्बि | ५५ | ६ |
| प्रोञ्झिन्न० | प्रोञ्झिन्न० | ५५ | ११ |
| मासलत्व | मांसलत्व | ५७ | १३ |
| भयादिनाऽपिस- | भयादिनाऽपि स- | ५८ | १२ |

इति शिवम्।



॥ श्रीः ॥

मैथिलश्रीगङ्गानन्दकवीन्द्रनिर्मिता

# काव्यडाकिनी ।

श्रीसिद्धेश्वर्यै नमः ।

पायाच्चिराय भवतः सकलादपाया-
त्कंसारिचारुकरवारिजवर्तिवेणुः ॥
आभीरवामनयनाचयचित्तवित्त-
चौर्याय सन्धिरिव निस्वनतस्करस्य ॥ १ ॥
काव्यदोषाऽवबोधाय कवीनां तमजानताम् ॥
गङ्गानन्दकवीन्द्रेण क्रियते काव्यडाकिनी ॥ २ ॥

तत्र—

मुख्यावरोधकृद्दोषः,

मुख्यो रसः । अवरोधकृत् प्रतिबन्धकः । रसमात्रप्रतिबन्धकतावच्छेदकरूपवानित्यर्थः । तच्च रूपं श्रोत्रकटुत्वादेरेव, न चपेटापातनादेः। प्रतिबन्धकता तु क्वचित्साक्षात् क्वचित्परम्परया चेत्यालोचनीयम् ।

ननु श्रोत्रकटुत्वादेः रौद्रादिरसबुद्ध्यनवरोधकत्वात्तत्राऽव्याप्तिरित्यत आह—

यस्य ज्ञाने सति क्वाऽपि प्रतिबन्धोऽस्ति तत्र सः ।
अत एवाऽस्य दोषस्य प्रोक्ता धीरैरनित्यता ॥

स दोषः । अस्य श्रोत्रकटुत्वादेः । तथा च रसत्वव्याप्यधर्मावच्छिन्नोपस्थितिप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकरूपवत्त्वं त-

त्वम्। व्याप्यता तु भेदाऽभेदसाधारणी। तेन सकलरसप्रतिबन्धके साधुत्वादौ नाऽव्याप्तिः।

पदादिस्थः स पञ्चधा ॥

आदिशब्दात्पदैकदेशवाक्यार्थरसा गृह्यन्ते। पञ्चधेति पदं तद्गुणसंविज्ञानबहुव्रीहिस्फोरणार्थम्। अथ वाऽलङ्कारदोषाणामातिरेक्यव्यवच्छेदाय। तेषामेष्वन्तर्भावो वक्ष्यते। तस्मात्पदमादाय तत्तद्दूषिताभेदाद्दोषस्य पञ्चविधत्वमुपपन्नमिति।

क्रमेण तद्भेदानाह—

पदेऽस्ति श्रोत्रकटुता च्युतसंस्कातिता तथा ॥ ३ ॥
अप्रयुक्ताऽसमर्थत्वे निहताऽनुचितार्थते ॥
अवाचकानिरर्थत्वे ग्राम्यसन्दिग्धते तथा ॥ ४ ॥
अश्लीलत्वाऽप्रतीतत्वे नेयार्थक्लिष्टते तथा ॥
अविमृष्टविधेयांशविरुद्धमतिकारिते ॥ ५ ॥
एवं षोडशधा दोषः पदवर्ती प्रकीर्तितः ॥

अत्र क्लिष्टत्वादीनां त्रयाणां समास एव पददोषत्वमन्येषां त्वसमासेऽपीति विशेषः। क्रमेणैषां लक्षणमाह—

श्रोत्रकटु समाख्यातं माधुर्याव्यञ्जकं पदम् ॥ ६ ॥

यत् माधुर्यगुणं न व्यनक्ति तत्पद श्रोत्रकटुत्वदोषवादित्यर्थः। शब्ददोषस्य शब्दघटितं लक्षण सर्वत्र बोध्यम्।

ननु प्रतिकूलवर्णेऽतिव्याप्तिरिति चेत् न। यत्र ओजोव्यञ्जनयोग्या एव वर्णा रसविरुद्धास्तदिति सूत्रार्थः। तत्र सुकुमाराणामपि वर्णानां रसप्रतिकूलत्वात्। यथा—

मानोरगदंशाया जीवितनाथे नते पदयोः।
नवजलधरधीरध्वनिरभवत्ताक्ष्यो मनस्विन्याः ॥

अत्र तार्क्ष्य इति । यत्र यत्र पदं साधु तत्र तत् च्युतसंस्कृति । तत्र अर्थे यथा—

भवन्त्येव गुणास्तेषां तिष्ठन्ते ये सदन्तिके ।
कीरा धीरालये दैवीरुद्गिरन्ति वचस्ततीः ॥

अत्र तस्मै कास्तिष्ठत इत्यत्र प्रकाशनार्थे नियमनमात्मनेपदस्य गतिनिवृत्त्यर्थे त्वसाधुतैव । तस्मात् 'ये तिष्ठन्ति सदन्तिके' इति पठनीयम् ।

नन्विदं पद साधु भवत्येव । परन्तु हन्तीति पदमुपसन्दानं यथा गमनार्थे तथा तिष्ठत इति पद विना चतुर्थीमसमर्थमित्यस्वरसादाह—

## तत्तद्व्याकरणासाधु पदं वा च्युतसंस्कृति ॥

तत्तद्व्याकरणेति । यया भाषया यत्काव्यं क्रियते तद्भाषासाधुताप्रयोजकव्याकरणासाध्वित्यर्थः । तेन प्राकृतभाषाद्यारब्धकाव्यदोषसङ्ग्रहः । यथा—

महाराजत्रयं पाणिस्तव कल्पद्रुमायते ।
अमुना दीयते यस्मादार्थिभ्यः फलमीप्सितम् ॥

अत्र महाराजत्रिति । 'धराधीश भवत्पाणिर्भुवि कल्पद्रुमायते' इति पठनीयम् ।

## पदं तथा समाम्नातमपि व्याकरणादिभिः ॥ ७ ॥
## कव्यनादरपात्रं यदप्रयुक्तं तदुच्यते ॥

तथेति दुश्च्यवनपदस्य शक्रत्वप्रकारकप्रतीतौ सामर्थ्यमप्यस्ति, परन्तु कवीनामप्रयोगविषयत्वादप्रयुक्तत्वमित्यर्थः । न च निहतार्थेन सङ्करः, अनेकार्थत्वाभावात् । नाऽप्यवाचकेन तात्पर्यविषयधर्मप्रकारकप्रतीतेर्जनकत्वात् । यथा—

पङ्कासक्तिमतो लोकान् सत्कुर्वन्ति न साधवः ।
पद्माभिशामुखे भासा न भासयति चन्द्रमाः ॥

अत्र पद्मानिति। अत्र 'वा पुंसि पद्मम्' इति। यद्यपि पद्मशब्दः पुंलिङ्गे पठितस्तथाऽपि मूलकविभिर्न प्रयुक्तः। न च कोशे प्रयुक्त एव, तस्य साधुतामात्रप्रदर्शकत्वात्।

शाब्दिकाख्यातमप्यर्थं न बोधयति यत्पदम्॥ ८॥
अन्तरेणोपसन्दानमसमर्थं तदुच्यते॥

शाब्दिकेति। वैयाकरणपठितमपीत्यर्थः। अवाचकस्योपसन्दानेनाऽपि विवक्षितार्थबोधकत्वाभावात्। निहतार्थस्य त्वविलम्बेनाऽप्रसिद्धार्थप्रत्यायकत्वात्। अत्र विलम्बेनाऽपि न विवक्षितार्थबोध इति विशेषः। यथा—

कैरवबन्धुकरग्रहभयादिव व्याकुला हन्ति।
अस्त गतवति मिहिरे कैरवशरणं सरोजश्रीः॥

अत्र हन्तीति पदस्य गमनार्थत्वाभिप्रायेण प्रयुक्तस्योपसन्दानं विना तदर्थशक्तेरभावात।

प्रसिद्धेनाऽप्रसिद्धोऽर्थो यस्यार्थेन विधीयते॥ ९॥
तत्पदं व्यर्थमुदितं निहतार्थं विचक्षणैः॥

प्रसिद्धेनेति। रूढ्या झटिति बोधितेनेत्यर्थः। अप्रसिद्ध इति योगेन विलम्बपूर्वमुपस्थापित इत्यर्थः।

कचस्ते वारिजं तन्वि! मीनौ तव विलोचने।
मृणाली बाहुयुगली सरसी प्रतिभासि नः॥

अत्र वारिजपदस्य पद्मरूपः प्रसिद्धोऽर्थः शैवालरूपमप्रसिद्धमर्थं स्थगयति।

व्यनक्ति निन्दास्तोत्रे यत्पदं स्तोतव्यनिन्द्ययोः॥१०॥
तात्पर्यागोचरीभूते तत्स्यादनुचितार्थकम्॥

अत्र तात्पर्यागोचरीभूते इति विशेषण व्याजस्तुतिनिवारणाय, तत्र

निन्दास्तुत्योस्तात्पर्यविषयत्वात्। निन्दाव्यञ्जकं यथा—

सर्वतीर्थाभिषेकेण सर्वदा यागकर्मभिः।
देहोऽयं मनुजाधीश! छगलस्येव ते शुचिः॥

अत्र छगलस्येवेत्यनेन तत्सादृश्यलाभादनीप्सिततद्गतचेष्टायाः प्रतीतिः। स्तुतिव्यञ्जकं यथा—

कार्पण्येन पितुस्तुल्यः पितामहपथच्युतः।
जनैरग्राह्यनामाऽसौ कुपतिस्त्यज्यतां बुधाः!॥

अत्र कस्यचिन्निन्दायां वाच्यायां कुपतिरित्यनेनाऽनभीष्टपृथिवीपतिप्रत्यय।

## तात्पर्यविषयीभूतवस्तुधर्मप्रकारिका ॥ ११ ॥
## यतो न जायते बुद्धिः पदं तत्स्यादवाचकम् ॥

नन्वेवमसमर्थेऽतिव्याप्तिरिति चेत्सत्यं, किं तु तत्र वस्तुनोऽपि नोपस्थिति. क तद्धर्मस्य। इह तु केनचिद्रूपेण वस्तूपस्थितिरिति विशेषः। यथा—

निर्धना अपि दातार. सेवनीया मनीषिभि।
भवन्ति च परित्याज्या धनवन्तोऽपि जन्तवः॥

अत्र जन्तुपदस्याऽदात्रर्थे विवक्षितस्य तदवोधकत्वात्। न च जन्तुत्वेन रूपेण दातुरभिधायकत्वमप्यस्तीति वाच्यम। अदातृत्वेनाऽदातृप्रतीतेरुद्देश्यत्वात्। यथा वा—

त्वय्यदृष्टे प्रियज्योत्स्नी गाढध्वान्तमभूत्तदा।
दृष्टे पुनस्तमःसङ्कुव्याप्ताऽपि रजनी दिनम्॥

अत्र ध्वान्तवैपरीत्याऽभिप्रायेण दिन प्रकाश इत्युक्तम्, तदर्थे दिनपदमवाचकम्। न च लक्षणयाऽत्र बाधः। मुख्यार्थबाधाभावात्। यथा वा—

करुणाकोमलः पातु कपाल विश्वधत्करे।
उद्धर्तुं शोकपाथोधेर्जनान् पोतमिवेश्वरः॥

अत्र विदधादिति पदं धारणार्थावाचकम्। विपूर्वाद्दधाते करण एव तात्पर्यं नियतम्। अत एवाऽत्र लक्षणयाऽपि न तदर्थभिन्नार्थप्रतीतिः। न चाऽसमर्थनिहतार्थाभ्यामत्र सङ्कर इति वाच्यम्। विपूर्वाद्दधातेरनेकार्थत्वाभावात्।

अव्यय वृत्तानियमवाक्यार्थानुपकारकम् ॥ १२ ॥
श्लेषाप्रयोजकं यच्च तत्पदं स्यान्निरर्थकम् ॥

अत्र वृत्तनियमानुपकारक वाक्यानुपकारक समुच्चयरूपार्थानुपकारकमित्यन्वयः। अव्ययमित्यनेनाऽधिकपदनिवारणम्। सर्गबन्धकृतनियमे यमकादिच्छन्दसि वाक्यालङ्कारे श्लेषालङ्कारे च निरर्थकस्याऽपि चादेः प्रयोगः सर्वसंमत। यथा—

करोति च सुधावाणि! विलोचनयुगं तव।
सुधांशुकिरणस्पृष्टसरसीरुहविभ्रमम् ॥

अत्र चशब्दः।

लोकमात्रप्रसिद्धं यत्पदं तद्ग्राम्यमुच्यते ॥ १३ ॥

प्रसिद्धमिति चमत्कारीत्यर्थः। अन्यथा शास्त्रे प्रसिद्धस्य कटिपदस्याऽसङ्गतिः स्यात्। नन्वयं गुणो भवति, न तु दोष इति चेत् न, लोकपदेन ग्राम्यजनस्याऽभिधानात्। अत एव कटिपदाद्युच्चारणेन व्रीडाव्यक्तिर्विदग्धानां न तु ग्राम्याणाम्। तेषां तु चमत्कार एव। अश्लीले देशभाषानिबन्धनमपि लज्जादायित्वमत्र तु संस्कृतनिबन्धनमेवेति विशेष.। यथा—

कटिः कनकवर्णाभा मुखं शीतांशुसुन्दरम्।
जगद्विजेतुकामस्य कामस्याऽसि पताकिनी ॥

अत्र कटिशब्दः।

सन्दिग्धं तत्तु तात्पर्यसंशयो यत्र जायते ॥

तात्पर्यसंशयेन यदर्थानिश्चयस्तत्सन्दिग्धमित्यर्थः। यथा—

स्वच्छन्दचारिणो वार्या विना यन्तृनिभास्तव।
भवन्ति हन्तुमुद्युक्ताश्चला इव महीधराः ॥

अत्र वार्या वारणीया' किं गजबन्धिन्येति सन्देहः।

## जुगुप्साऽमङ्गलव्रीडा यदश्लीलं व्यनक्ति तत् ॥ १४ ॥

अत्र जुगुप्सादित्रयं यद्व्यनक्ति तत्पदं त्रिविधमश्लीलमित्यर्थः। भाषानिबन्धनमश्लीलत्वं देशविशेष एव। संस्कृतनिबन्धनं तु सर्वदेशसाधारणमिति विशेषः। प्रथमं यथा—

वायुं ददस्व घर्मांशुकिरणस्पर्शतापि ते।
मदङ्के रङ्कुनयने! शुष्यन्तु स्वेदबिन्दवः॥

अत्र वायुशब्दो जुगुप्साव्यञ्जकः। द्वितीयं यथा—

मदीयक्रोडपर्यङ्के समुपैहि सुलोचने!।
संस्थिताऽसि कुतः कान्ते द्वारोपान्तेऽतिलीनवत्॥

अत्र संस्थितामिति पदममङ्गलव्यञ्जकम्। तृतीयं यथा—

'दूरादेव समालोक्य विस्फुरत्साधनं तव।
वद भूमीपते! तावत्साध्वसं को न गच्छति॥

अत्र साधनपदं पुंव्यञ्जनप्रत्यायकतया व्रीडाकरम्।

## शास्त्रमात्रप्रसिद्धं यदप्रतीतं तदुच्यते ॥

शास्त्रपदमलङ्कारशास्त्रातिरिक्तशास्त्रपरम्। तथा चाऽलङ्कारशास्त्रप्रसिद्धे तन्मात्रशास्त्रप्रसिद्धे च न दोषः। शास्त्रान्तरे तु दोष इत्यर्थः। अलङ्कारशास्त्रप्रसिद्धशब्दार्थस्य यदबोधः स तु पुरुषदोषो न पुनरलङ्कारशास्त्रस्य। 'न ह्ययमपराधः स्थाणोर्यदन्धस्तं न पश्यति' इति न्यायात्। यथा—

आशयाम्भोनिधेरन्तर्निमग्नस्य निरन्तरम्।
जायतां कथमेतस्य तत्त्वज्ञानतटस्थितिः॥

अत्राऽऽशयशब्दो वासनापर्यायत्वेन योगशास्त्रे प्रतीतः।

## निषिद्धा लक्षणा यत्र नेयार्थं तत्पदं स्मृतम् ॥ १५ ॥

निषिद्धेति। प्रयोजनप्रतिपादकवाचकशब्दान्तरे सति अवाचकाश्र-

यणान्निःप्रयोजनेत्यर्थः । 'गङ्गायां घोषः' इत्यत्र प्रयोजनप्रतिपादकस्याऽभावात् । यथा—

कुरङ्गनयने! नूनमनेन तनुरोचिषा ।
त्वया सौदामिनी नीता चरणाघातपात्रताम् ॥

अत्र चरणाघातेत्यादिना निर्जितत्वं लक्ष्यते । यदि पुनर्जीयत इति क्रियते तदा निःप्रयोजनलक्षणादोषपरिहारः ।

## यतो व्यवहिता बुद्धिरर्थस्य क्लिष्टमाह तत् ॥

व्यवहितेति । अनेकपदार्थान्तरितपदार्थसामान्यस्य विशेषस्वरूपानुपस्थितया विलम्बितेत्यर्थः । तेन 'पिधत्ते हेरम्ब हिमकरकलामौलिमहिषी' इत्यत्र भगवत्या विशेषस्वरूपेणोपस्थितौ न दोषः । यथा—

समुद्रमथनोत्पन्नसरित्स्रोतासि मज्जता ।
सखे! तत्संमुखेनैव ज्ञात किमपि चक्षुषा ॥

अत्र समुद्रमथनेनोत्पन्नममृतं तस्य नदीप्रवाह इत्यर्थः । समुद्रमथनेनाऽमृतादन्यस्याऽपि सम्भवादित्यत्र बोधविलम्बेन दोषः ।

## अयथावद्विनिर्देशो विधेयांशस्य यत्र तत् ॥ १६ ॥
## अविमृष्टविधेयांशमलङ्कारविदो विदुः ॥

अयथावद्विनिर्देशस्तु प्रकृते समासेषूद्देश्यविधेयभावतात्पर्यग्राहकप्रकृतिपौर्वापर्यविपर्यासः । तथा चाऽस्य दोषस्य समास एव पदवृत्तितेति भावः ।

अत एव 'अथ समासगतमेव' इत्यनेन नियम वदतः काव्यप्रकाशकृत समासेष्वेनमुदाहृत्याऽसमासेषूदाहरतो नाऽनवधेयवचनत्वशङ्कापीति ध्येयम् ।

बहुव्रीहौ यथा—

देवाभिषेकजनितानुमितातिपुण्यो जातोऽस्म्यसंशयमहं महनीयमूर्ते! ।
क्षोणीतलात्रिदशभूमिरुहं भवन्त नेत्रद्वयेन यदनेन विलोकयामि ॥

अत्राऽनुमितत्वस्य समासे गुणीभावादप्राधान्यम् । अतो न विधेयत्वम् । तस्मादभिषेकजनिताऽतिपुण्यमनुमितमिति युक्तम् ।

कर्मधारये यथा—

सरसिजसुन्दरवदने ! नयनतरङ्गस्तवोल्लासी ।
मदनस्याऽपरमोहनबाण इवाऽन्तर्विमोहयति ॥

अत्राऽपरत्वमुत्प्रेक्ष्यं तस्य समासे गुणीभावादप्राधान्यम् ।

नञ्समासे यथा नैषधीयचरिते—

निमीलिनादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि सङ्गोप्य कदाऽप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥

अत्राऽवीक्षित इत्यत्र प्रसज्यप्रतिषेधो विधेयत्वेन वक्तुमुचितस्तस्य समासे गुणीभावात्पर्युदासत्वेन विधेयत्वाऽनवगमः । यदुक्तम्—

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥

तथा चाऽत्र निषेधस्याऽप्राधान्यादविधेयत्वम् ।

यत्र तु निषेधस्य प्राधान्यं, तत्र यथा—

त्वद्देहद्युतयः सरन्ति परितो नो विद्युतस्त्वद्भुजे
पर्यस्ता चिकुरावलीयमधुना नो शैवलानां चयः ।
हारस्ते हृदये कुरङ्गनयने ! नाऽसौ मृणालीलता
कोऽयं चेतसि विभ्रमस्तव सखि ! त्रासः परित्यज्यताम् ॥

अत्र नञर्थ एव विधेयः । पर्युदासलक्षणं तु—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

जघानाऽकुपितो लोके सकलान् प्रतिभूपतीन् ।
समस्तधरणीभारं बभाराऽयमपीडितः ॥

अत्राऽकुपितत्वाद्यनूद्य प्रतिभूपतिहननाद्येव विधेयमतो गुणभावो नञर्थस्याऽभीष्टः ।

तद्धितार्थविशेषणीभूताऽन्यपदार्थे बहुव्रीहौ यथा—

कुसुमं विशिखो भृङ्गः सहायो दग्धदेहता।
यस्याऽस्ति स स्मरो विश्वं क्षोभयत्येतदद्भुतम् ॥

अत्राऽक्षोभहेतौ प्रदर्शनीये देहो दग्ध इति दग्धत्वं विधेयम्।

## यद्विरुद्धधियो हेतुर्विरुद्धमतिकारि तत् ॥ १७ ॥

धिय इति निश्चयरूपाया इत्यर्थः। तेन सन्दिग्धे नाऽतिव्याप्तिः। यथा—

गौरीलोलविलोचनाऽञ्चलचमत्कारावलोकोल्लस—
द्रोमाञ्चप्रचयप्रसारणजडीभूताऽङ्गविक्षेपणः।
तालव्याकुलयोगिनीगणसमाहूताऽमरेन्द्रासुरैः
स्मेरास्यावलिवीक्षितो जयकृते भूयाद्भवानीपतिः ॥

अत्र भवानीपतिशब्देन भवस्य पत्नी भवानीति व्युत्पत्त्या भवपत्नीपतिप्रत्ययः। ननु भवानीपतिपदं शिवे योगरूढमतो न विरुद्धाऽर्थप्रत्यय इति चेत् न, सामग्रीसद्भावे विरुद्धाऽर्थस्मरणवारणस्याऽशक्यत्वात्। यथा वा—

कण्ठे हाराऽवाप्तिः कुचयुगले चन्दनालेपः।
शुचि वसनं तव क्व पथि विधुभासस्त्वां विशोषयतु ॥

अत्र हाराऽवस्थाऽवाप्तिरिति विरुद्धा प्रतीतिः।

समासे श्रोत्रकटुत्वं यथा—

प्रवासनिरतः कान्तः स्वयं च नवयौवना।
दधातु सा कथं प्राणानक्षीणेन्दुक्षये क्षणात् ॥

स्पष्टम्।

रक्तप्रवालमिव ते पाणियुगं लोचने अरुणे।
अद्भुतमिदमिह यत्त्वं सम्प्रत्यनुरागशून्याऽसि ॥

अत्र रक्तप्रवालमिति प्रवालत्वस्य रक्तत्वाऽव्यभिचारात्कर्मधारयो-

ऽसाधुस्तस्य परस्परव्यभिचारे साधुत्वात् । एवमन्येषामपि समासगतत्वमूह्यम् ॥

इति श्रीमैथिलश्रीगङ्गानन्दकवीन्द्रकृतौ
काव्यडाकिन्यां प्रथमा दृष्टिः ।



निरर्थत्वाऽसमर्थत्वच्युतसंस्कृतितेतरः ॥
सर्वो वाक्येऽप्ययं दोषः पदभागेऽपि कश्चन ॥ १ ॥

कश्चन न तु सर्वः ।

ननु निरर्थकत्वादीनां नानापदवृत्तित्वे वाक्यदोषत्वमक्षुण्णमित्यत आह—

वाक्यदोषोऽन्वयज्ञानहेत्वनेकपदास्थितिः ॥

कुत इत्याह—

निरर्थकादिभिः शब्दैरनेकैरन्वयस्य धीः ॥ २ ॥
कथञ्चिज्जन्यते नैव तेन ते नैव तद्गताः ॥

ते निरर्थकादयः । नैव तद्गता नैव वाक्यवृत्तयः ।

नन्वेवमनेकस्मिन्नवाचकेऽतिव्याप्तिरिति चेत् न, तत्र सामान्यतोऽन्वयबोधो भवतीत्युक्तम् । इह तु केनाऽपि प्रकारेणाऽन्वयबोधः । क्रमेणैषामुदाहरणानि यथा—

परेतगोष्ठ्या परिवेष्ट्यमानो यश्चेष्टते नाट्यकलाऽभियुक्तः ।
खट्वाङ्गजुष्टः किल यस्य हस्तः स स्तादभीष्टाय तवाऽष्टमूर्तिः ॥

अत्र श्रोत्रकटुत्वं स्पष्टम् ।

ननु रसविरुद्धा वर्णा इत्युक्तम् । अत्र तु रस एव नास्ति, कस्य प्रतिबन्धोऽस्त्विति चेत् न, रस्यत इति व्युत्पत्त्या रसपदेन भावोऽप्यु-

च्यते। प्रकृते पुनः शिवविषयकरतिभावस्य सत्त्वात्तस्य च वर्णानां श्रुत्युद्वेजकतया स्थगनमतो न विरोधः।

सुत्रामा दैवतो यस्य रक्षकस्त सुरद्रुमम्।
अद्याऽऽनयाम्यहं कृष्णः सत्य सत्ये! ब्रवीमि ते॥

अत्र सुत्रामदैवतशब्दौ शक्रपुल्लिङ्गयोरप्रयुक्तौ।

गावौ हरिपयोजातौ क्षयश्च मकरध्वजे।
कुजश्च वध्यो यस्याऽऽसीत्स दद्याद्भविकं विभुः॥

अत्र गोहरिपयोजातक्षयमकरध्वजकुजशब्दाः वृषभशक्रकमलविनाशकामग्रहविशेषाऽर्थतया प्रसिद्धाऽर्था नेत्ररविचन्द्रगृहपयोधिनरकासुरार्थेषु निहताऽर्थाः।

गुणैस्तुषारसदृशैर्धवलोऽसि महीभृताम्।
जनैः समन्ततः स्तोत्रकोटिलक्ष्मा हि गीयते॥

अत्रोपश्लोकयमानस्य वृषभत्वप्रतीत्याऽनुचिताऽर्थता।

लोकाऽसमेन सम्पूज्या सदा समभुजाप्रिया।
करोतु सुखजातं ते जलाश्रयशरीरजा॥

अत्र लोकाऽसमसमभुजजलाश्रयशरीरजशब्दा लोकत्रयचतुर्भुजजलनिधितनूजानामवाचकाः।

फूत्काररोच्छूनगल्लोऽय रोदिति प्रतिवासरम्।
त्यक्तखादनपानश्च भल्लं वेत्ति न किञ्चन॥

अत्र फूत्कारगल्लादिशब्दा ग्राम्याः।

वामाऽवलोकनोत्साही विग्रहव्यग्रलोचनः।
सकम्पकटकोऽप्येष किञ्चित्कर्तुं समीहते॥

अत्र वामादिशब्दाः शत्रुयुद्धसेनार्थाः, किं कामिनीदेहकङ्कणार्था इति सन्देह।

विशो वाणिज्यकर्तारः सुखिनः स्युस्तदा गृहे।
यदि तेषां स्वकृत्येषु प्रवृत्तिः सततं भवेत्॥

अत्र विट्प्रवृत्तिशब्दौ जुगुप्साव्यञ्जकौ।

पावकं हि पितृसद्म सत्वरं याहि सुन्दरि! किमत्र तिष्ठ[सि]ति।
म्लानिमानमपकृष्य तत्र ते संस्कृतिं तु जननी विधास्यति ॥

अत्र पितृसद्मसंस्कृतिशब्दावमङ्गलव्यञ्जकौ।

महत्ते साधनं दृष्ट्वा त्रसत्येवोपसर्पणात्।
कम्पनाऽरालनेत्राऽसावनन्यजभया नृप !॥

अत्र साधनोपसर्पणशब्दौ पुंव्यञ्जनसुरताऽऽरम्भस्मारकतया लज्जादायिनौ।

सर्वदा वर्तते यस्मिन्नाशयः सर्वतो बली ।
जायतां सुमतेस्तस्य तीव्रसंवेगिता कुतः ॥

अत्राऽऽशयतीव्रसंवेगिताशब्दा वासनाऽतिशयवैराग्यपर्याया योगशास्त्रमात्रे प्रतीताः ।

नितम्बं किरणद्वन्द्वे परिधेहि सुलोचने ।
भवत्यास्तरलो नित्यं लक्ष्यते भूषणस्पृही ॥

अत्र नितम्बकिरणतरलशब्दै कटककरनायकशब्दाः प्रयोजनं विना यल्लक्ष्यन्ते तदेव नेयार्थता ।

चेतो वाच श्रवणद्वयं च पाथोजनयनायाः ।
तुष्यति निस्सरदमृतद्रवापगां मे समाकर्ण्य ॥

अत्र पाथोजनयनाया वाचं समाकर्ण्य मे चेत. श्रवणद्वयं च तुष्यतीति सम्बन्धे क्लिष्टत्वम् ।

हासश्रीर्जयति क्षपाकरमपाकुर्वन्ति केशत्विषः
शैवालानि विलोचनं विदलयत्यम्भोजदम्भोदयम् ।
एषा निश्चलया चिरं चपलया कल्याणि! तुल्या तनु–
र्यस्मिन्भाविनि! भाविताऽसि भुवने देवोऽयमेवोदितः ॥

अत्र नायिकाभावनाविषयो नायक प्राप्तस्तमयामित्यनेनाऽनूद्य तत्राऽप्राप्तं देवत्व विधातुमुचितम् । तस्मादयमेव देव इति युक्तम् । यदुक्तम्—'अनुवाद्यमनुक्त्वैव विधेयं न प्रदर्शयेत्' इति ।

अयथावद्विनिर्देशं तु प्रकारान्तरेणाऽऽह—

यच्छब्दानन्तरं यत्र तच्छब्दो नैव दीयते ॥ ३ ॥
समासे वा गुणीभूतः सम्बन्धो यत्र गम्यते ॥
तत्र तत्र बुधाः प्रोचुरविमृष्टविधेयताम् ॥ ४ ॥

यच्छब्दाऽनन्तरमित्युपलक्षणम्। तच्छब्दाऽनन्तरं यच्छब्दाऽनुपादानेऽपि बोध्यम्। यथा—

अष्टाङ्गयोगपूतानामज्ञेयो योगिनामपि।
योऽसौ गोपवधूवृन्दैरमन्दमुपभुज्यते॥

अत्राऽसाविति पदं विधेयतच्छब्दाऽभिप्रायेण प्रयुक्तमपि विधेयाऽबोधकम्। ननु—

अमुष्य भरतस्योक्त श्रुत्वा मूर्छन्ति मे मुदः।
शिखण्डिन्या इवाऽकाण्डे वारिवाहस्य गर्जितम्॥

इत्यत्राऽमुष्येति पदं तत्पदार्थमभिधत्तेऽतोऽदःशब्दस्तत्पदार्थ इति। मैवम्—

योऽसौ ग्राहमुखग्रासादुज्जहार करीश्वरम्।
स त्राता दुःखपाथोधेर्मम नान्योऽस्ति कश्चन॥

इत्यत्र स इति पदमनर्थकं स्यादतोऽदःशब्दो न तच्छब्दार्थकः। अथ—

यस्य मनागपि भक्तिर्भगवति भूताऽधिनाथेऽस्ति।
क्षणमपि किमस्यभूयात्कथय सखेऽनिष्टसम्पर्कः॥

इत्यत्रेदंपदस्येवाऽदःपदस्य सर्वत्र तत्पदाऽर्थाऽभिधायकत्वमिति चेत्, सत्यं, परं तु तस्मिन्नेव वाक्ये स्थितमदःपदं प्रसिद्धिमेव परामृशति न तत्पदार्थमभिधत्ते। तथा हि—यत्पदनिकटस्थितस्याऽदःपदस्य प्रसिद्धयर्थकता। न वाक्यान्तरोपात्तस्य तु तथा। यत्पदनिकटस्थितस्याऽदःपदस्य च प्रसिद्ध्यर्थकतायां समानविभक्तिकत्वनियमः। अन्यथा—'तमभ्ये-

त्युत्सुका लक्ष्मीर्यस्याऽसौ सुप्रियो भवेत्' इत्याद्यसङ्गतं स्यात् ।

ननु बहुषु स्थलेषु यत्तदोरेकैकस्य प्रयोगदर्शनान्नित्यसापेक्षत्वाऽभावात्तत्कथमत्र दोषावतार इति चेत् न, क्वचिदेकतरोपादाने क्वचिदुभयोरनुपादानेऽर्थसामर्थ्याद्यत्तदोरर्थः प्रतीयते इत्येव यत्तदोर्नित्याऽभिसम्बन्धो न तु सर्वत्र शब्दोपात्तत्वनियमः । तथा हि—

यस्योपरि प्रतिपलं परिपालयन्ती
सा सर्वतो बलवती भवितव्यताऽस्ति ।
तं हन्तुमुद्यतकरालकृपाणपाणिः
क्रोधातुरोऽपि शमनः कथमस्तु शक्तः ॥

इत्यादौ प्रसिद्धाऽर्थविषये,

पाणिभ्यां नवपल्लवस्य विजय वाचा मधूलीभयं
कान्त्या काञ्चनवञ्चनं विदधतीमक्ष्णा मृगक्षोभणम् ।
तामालोकयतः सुधाकरमुखीं लज्जामुषा चक्षुषा
सान्द्रानन्दपयोनिधौ मम सखे ! सद्यो निमग्नं मनः ॥

इत्यादौ पूर्वप्रक्रान्ताऽर्थविषये,

कुतः कमलपत्राक्षि ! तदेव वदनं तव ।
साञ्जनाऽश्रुसमासङ्गान्नीयते चन्द्रतुल्यताम् ॥

इत्यादौ अनुभूताऽर्थविषये च तच्छब्दो यच्छब्दं नाऽपेक्षते ।

क्वचित्तु तच्छब्दाऽनपेक्षी यच्छब्दो यथा—

न विस्मयो यत्कमलस्य लक्ष्मीं रक्ताऽधरासङ्गि मुखं मुमोष ।
कर्णाऽन्तिके सञ्चरताऽम्बुजश्रीस्त्वया हृता नेत्र ! विचित्रमेतत् ॥

अत्र न विस्मयो नाश्चर्य—इति प्रथममन्वयबोधे कुतो न विस्मय इत्याकाङ्क्षायां 'यत्कमलस्य लक्ष्मीं रक्ताऽधरासङ्गि मुखं मुमोष' इत्यन्वयबोधे यत्पदस्य न तत्पदाकाङ्क्षा । वस्तुतस्तु उत्तरवाक्यस्थिते यत्पदे पूर्ववाक्ये न तच्छब्दस्य शाब्दमुपादानम् । अर्थसामर्थ्यात्तत्पदाऽर्थः प्रतीयते ।

यदि च—'यदद्भुतं नो कमलस्य लक्ष्मीम्' इत्यादि क्रियेत, तदा तद्दोषनादवस्थ्यम् ।

उभयोरनुपादाने यथा—

दुर्गतिदारणहेतोरकृप ! नृप ! प्रार्थये न त्वाम् ।
काचिद्दैन्यनिहन्त्री जगदुपरिष्टाद्वरीवर्ति ॥

अत्र यत्तच्छब्दयोरुपादानं विना या काचिज्जगदुपरि वरीवर्ति तां प्रार्थयेऽहमिति सामर्थ्यादनवरुद्धा बुद्धिरुत्पद्यते। अन्यथा पूर्वोत्तराभ्यां मिलित्वा नैकार्थप्रतिपत्तिः । पूर्वार्धोत्तरार्धवाक्ययोर्नैकवाक्यताप्रतिपत्तिरित्यर्थः ।

ननु 'स भाग्यवान् शूलिनि यस्य भक्तिः' इत्यादौ उत्तरवाक्यस्थमपि यत्पद तच्छब्दमपेक्षते, तस्मात्क्वचित्तच्छब्दाऽनपेक्षी यच्छब्द इति न सङ्गच्छते इत्यत आह—

उत्तरस्मिन् गतं वाक्ये यदा भवति यत्पदम् ॥
तच्छब्दस्याऽनुपादानमादानं वा न दूषणम् ॥५॥

उत्तरवाक्यस्थे यच्छब्दे तच्छब्दः पूर्ववाक्ये चेदुपादीयते, न वोपादीयते, उभयथाऽपि न दोष' ।

'तद्वचो यदि पिकेन लज्जितम्' इत्यत्राऽन्यत्र वा पूर्ववाक्यगतो यच्छब्दस्तच्छब्दं नाऽपेक्षते तत्कथमनुगम इत्याशङ्कायामाह—

यदीत्यादिपदं यत्र पूर्ववाक्यगतं भवेत् ॥
न तत्र तत्पदाऽपेक्षा भवतीति व्यवस्थितिः ॥ ६ ॥

आदिशब्दात् यत्रेति पद गृह्यते ।

ननु 'मया यद्यत्कृत पापं तन्मे हर महेश्वरि !' इत्यत्र यदीत्यादिपदभिन्नं यत्पदस्वरूपमास्ति, द्वितीयतत्पद नाऽस्तीति पूर्वोक्तदो-

यत्रास इत्यत आह—

नानारूपेण यच्छब्दद्वयादर्थ उपस्थितः ॥
तमिहैकेन रूपेण परामृशति तत्पदम् ॥ ७ ॥

अर्थात् यो योऽर्थस्तमित्यन्वयः। इह प्रकृते एकेन पापत्वेन।

यद्वा—

वीप्सयोद्दिश्यते चैकयत्पदे यत्पदद्वयम् ॥
आदेशियत्पदेनाऽर्थः समुपस्थापितोऽखिलः ॥ ८ ॥
एकरूपेण तं त्वेकं परामृशति तत्पदम् ॥
अतो न तत्पदे वीप्सा कुत्राऽपि च समीक्ष्यते ॥९॥
यदि वा दृश्यते क्वाऽपि तत्र स्यात्तुल्ययोगिनी ॥

यत्पदेन एकरूपेण उपस्थापित इत्यन्वय । एकं तत्पदमित्यन्वयः । तुल्ययोगिनीति यावत्सङ्ख्याकं यावत्पदं तावत्सङ्ख्याकतत्पदयोगव-तीत्यर्थः। 'यं यं पश्यसि सुतनो! स स रतिरमणेन हन्यते बाणैः' इत्या-दौ तुल्ययोगो बोध्य । इयांस्तु विशेषः-यत्पदाभ्यामनादेशिरूपाभ्यां भिन्नभिन्नरूपेणोपस्थापितं वस्तु तत्पदाभ्यां परामृश्यते ।

स सुन्दरः स सर्वज्ञः स सुबुद्धिः स कोविदः ।
स पूज्यः सर्वदा लोके यस्मिन् देवि ! कृपा तव ॥

इत्यत्रैकयच्छब्दोपादाने सति बहूनां तच्छब्दानामुपादानात् पूर्वो-क्तमसङ्गतमित्यत आह—

आकाङ्क्षा यत्तदोः शाब्दी भवेद्यत्र परस्परम् ॥१०॥
तत्रैवैकतरादाने दोषोऽयं समुदीरितः ॥

समासे यथा—

मोछाहेउत्तणमिह जुज्जइ विससोअरम्मि चदम्मि ।

सिरिहडरण्णवन्धू संसि कहं पवण ! तावेसि ॥*

अत्र सोदरे विषसम्बन्धो बन्धौ श्रीखण्डारण्यसम्बन्धश्च मूर्छाता-पाभावौ प्रति हेतुतयाऽभिमतौ । तच्च तयो समासे गुणीभावादनुपपन्नम् । यद्यपि पददोषोऽय, तथाऽपि पदद्वये वर्तत इति वाक्यदोषप्रस्तावे प्रोक्तः । एवं समासान्तरेऽप्यूह्यम् ।

विरुद्धमतिकारिता यथा—

अपाङ्गे कामचाञ्चल्यमधरे चाऽनुरागिता ।

ध्रुवं कमलपत्राक्षि ! को न वश्यो भवेत्तव ॥

अत्राऽपाङ्गे व्यङ्गादौ कामतश्चाञ्चल्यमधरे नीचे चाऽनुराग इति विरुद्धप्रत्ययः । प्रकाशितविरुद्धाऽमतपदार्थाभ्यामर्थव्यञ्जकताविरुद्धार्थविवक्षाविरहादस्य भेदः ।

एवं समासाऽसमासयोः पदवाक्यवृत्तित्वमुक्त्वा दोषाणां यथासम्भवं पदैकदेशवृत्तित्वमाह । यथा—

ललितवचनवत्वादुल्लसल्लोचनत्वात्

सुभगविहसितत्वाद्भङ्गुरभ्रूलतायाः ।

जनयति जनचित्ते हन्त शैवालकेश्याः

परिणतहिमभानोरास्यमस्या विशेषम् ॥

अत्र त्वात्वावर्णाः श्रोत्रकटवः ।

नन्वत्र नानापदवृत्तित्वे श्रोत्रकटुत्वस्य वाक्यदोषत्वमिति चेत्, उच्यते—

**पारुष्यं बहुवर्णानां यत्रैकत्र पदे भवेत् ॥ ११ ॥**

**तत्राऽस्य पदवृत्तित्वमन्यथा भागवृत्तिता ॥**

---

*मूर्छाहेतुत्वमिह युज्यते विषसोदरे चन्द्रे ।

श्रीखण्डाऽरण्यबन्धुस्त्वमसि, कथ पवन ! तापयसि ॥

इतिच्छाया । ( संशोधक. )

भागेऽस्य पदवृत्तित्वाऽभावान्नो वाक्यवृत्तिता ॥ १२ ॥

अस्य श्रोत्रकटुत्वस्य ।

जगद्व्यापि यशः सूते मतिमत्ता मनीषिणाम् ।
अनुक्षणमकीर्तिं च मूढानामर्थसंशयः ॥

अत्र मत्ताशब्दः प्रसिद्धेन क्षीबार्थेन निहतार्थः ।

विजेयो मघवद्द्रोही निवातकवचो बली ।
पुरा येन पुरस्तस्य कियानेष जयद्रथः ॥

अत्र विजेय इत्यत्र यत्प्रत्ययोऽतीतत्वार्थाऽवाचकः ।

दृष्टान्तीकृत्य कमलं मध्यविभ्रान्तषट्पदम् ।
शङ्के दृशः कृशोदर्याः सतारा विदधे विधिः ॥

अत्र दृश इति बहुवचनमनर्थकम् । एकस्या एव कृशोदर्या उपादानात् । न च दृक्पद क्रियायां प्रयुक्तमिति वाच्यम्, सतारा इति विशेषणस्याऽनन्वयप्रसङ्गात् ।

नन्विदमसाधु, द्वयोरेकस्मिन्वा वक्तव्ये बहुवचनस्याऽसाधुत्वादिति चेत्, उच्यते—

'बहुष्वि'त्यादिसूत्रेण द्वयोरेकस्य वा भवेत् ॥
तन्निषेधो बहुत्वस्याऽविवक्षायां कदापि नो ॥ १३ ॥

तन्निषेधः बहुवचननिषेधः ।

परोन्नतिसहो नित्यं निस्पृहो लोभ्यवस्तुषु ।
सर्वकौशलसम्पन्नो नूनमाढ्यचरो भवान् ॥

अत्राऽऽढ्यचरशब्दः पूर्वमाढ्य आसीदिति चरट्प्रत्ययान्तः, किमाढ्येषु चरतीति टप्रत्ययान्तो वेति सन्देहः ।

सोमोद्भवाऽभिषेकेण पूयते सकलो जनः ।
न परं ब्रह्मविद्वेषसमासक्तमना द्विजः ॥

अत्र पूयशब्दो रसविशेषोपस्थापकत्वेन जुगुप्साव्यञ्जकः ।

अनभिप्रेतकर्तारो बहवो भुवि मानवाः ।
कुर्वाणाः केङ्कृतिं काका निवसन्ति गृहे गृहे ॥

अत्र प्रेतशब्दोऽमङ्गलव्यञ्जक ।

अत्र वामनाचार्येणाऽप्रसिद्धाऽसभ्यलाक्षणिकाऽसभ्यलोकसंवीताऽसभ्यार्थाः शब्दाः सङ्गृहीताः । यथा—सम्बाध इति पदं सङ्कटार्थप्रसिद्धं न गुह्यार्थप्रसिद्धमिति अप्रसिद्धाऽसभ्यार्थम् । जन्मभूरिति पदं लक्षणया गुह्यार्थं न शक्त्येति लाक्षणिकाऽसभ्यार्थम् । सुभगाभगिनीकुमार्युपस्थानाऽभिप्रेतादिपद लोके न सङ्गृहीताऽसभ्यार्थमिति लोकसंवीताऽसभ्यार्थम् ।

तदुक्तम्—

संवीतस्य हि लोकेऽस्मिन् न दोषाऽन्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्याऽसभ्या च भावना ॥ इति ।

अतः प्रेतशब्दस्य प्रकृतोदाहरणं न सङ्गच्छते, तथाऽपि काव्यप्रकाशकृदभिप्रेतमिति प्रेतपदमिहोपात्तम् ।

लोचने क्रोधकलुषे विक्षिपन्तं रिपून्प्रति ।
हिरण्यरेतःसदृशं कस्त्वां युधि समीक्षताम् ॥

अत्र रेतःशब्दो व्रीडाव्यञ्जकः ।

स एव हि वचोबाणः सरोजदललोचने ! ।
यत्कृते हिमकुन्दासो न सुखाय भवन्ति ते ॥

अत्र स्ववाच्यवाचकत्वसम्बन्धेन वचःशब्देन गीःशब्दो लक्ष्यते । अतः पदैकदेशे नेयार्थता । तथैव गीःशर इत्यादावपि । तथा चात्रोभयपदं परीवर्ताऽसहम् । वारिध्यादौ तूत्तरपदमेव । वडवाऽनलादौ पूर्वपदमेवेति दिक् ॥

इति श्रीमैथिलश्रीगङ्गानन्दकवीन्द्रकृतौ
काव्यडाकिन्यां द्वितीया दृष्टिः



अथ वाक्यदोषानाह—

प्रतिकूलवर्णता स्याल्लुप्तविसर्गोपहतविसर्गत्वे ॥
अस्थानस्थपदत्वं हतवृत्तत्वं विसन्धित्वम् ॥ १ ॥
अर्द्धान्तरैकवाचकसमाप्तपुनरात्तगर्भितत्वानि ॥
अभवन्मतयोगत्वं पतत्प्रकर्षप्रसिद्धिधुतते च ॥ २ ॥
कथितपदत्वं च तथा न्यूनाधिकपदत्वे च ॥
अपदस्थसमासत्वं सङ्कीर्णाऽमतपरार्थते चाऽपि ॥ ३ ॥
अनभिहितवाच्यभग्नप्रक्रमते अक्रमत्वं च ॥
एवं किलैकविंशतिरुदीरिता वाक्यवर्तिनो दोषाः ॥४॥

क्रमेणैतानाह—

यत्र रसाऽननुकूलो वर्णचयो वाक्य एवाऽस्ति ॥
प्रतिकूलवर्णमूचुस्तदलङ्कृतिशास्त्रवेत्तारः ॥ ५ ॥

एवकारेण श्रोत्रकटोर्व्युदासः। तस्य पदेऽपि सत्त्वात्। न चाऽपदस्थसमासेऽतिव्याप्तिरिति वाच्यम्। तत्र समासस्यैव वैरस्याधायकत्वात्, न तु वर्णानाम्। तेषां तु रसाऽनुगुणत्वसम्भावनात्। तदिति वाक्यम्। तथा च तन्निरूपणेन तद्धर्मनिरूपणसिद्धिरित्युक्तम्।

शृङ्गारे यथा—

कष्टमिष्टेन संश्लिष्टा स्पष्टदष्टोष्ठसम्पुटा।
दृष्ट्वा निश्चेष्टयाऽऽचष्ट विम्बौष्ठी नष्टचेष्टताम् ॥

अत्र वर्णानां रसाऽननुगुणत्व स्पष्टम्।

रौद्रे यथा—

श्रीरामस्य वधूं विधूय सहसा तत्साध्वसं चेतसो
यच्चौर्येण निशाचराऽधम ! वनादेकाकिनीमाहरः।
तस्मादङ्गमिदं नखेन सकलं ते खण्डयित्वा रणे
कुर्यां वालिसुतोऽङ्गदोऽहमचिरादन्वर्थतां नामनि ॥

अत्र प्रोद्धतवर्णगुम्फः समासदैर्घ्यं च कर्तुमुचितम्, तदभावात् प्रतिकूलता। यथोचित तथोदाह्रियते—

उद्दामद्युतिदुर्दिनीकृतसमिद् युद्धाऽवरुद्धद्विष-
त्स्पन्दत्तद्रुतचित्तसाध्वसरसा सेय गदा निर्दया।
वक्षं कृष्टवतः पतत्वधिशिरो दुःशासनस्याऽद्य त-
त्पाञ्चाली चिकुरं चिराय विततं बध्नातु निर्बन्धतः॥

अत्र चतुर्थचरणे क्रोधाऽभावादनुद्धतवर्णन्यासः॥

## लुप्तविसर्गं तत्स्याद्यत्र विसर्गा विलुप्यन्ते॥

स्पष्टम्।

कृपणा निर्धना लोका न स्फुटं दोषकारणम्।
अप्यन्तर्बद्धसंरम्भा नीरदा इव भोगिनः॥

अत्र कृपणा इत्यादौ असकृद्विसर्गलोपः।

## उपहतविसर्गकं तद्यत्र विसर्गा गता ओत्वम्॥

स्पष्टम्। यथा—

अतिसत्त्वो महाकायो विमलो वसुदो नृपः।
यस्याऽग्रे पार्थकर्णाद्या विस्मृतिं समुपागताः॥

अत्राऽतिसत्त्व इत्यादावोत्वं प्राप्ता बहवो विसर्गाः।

## अस्थानस्थपदं तत्स्याद्यत्राऽस्थाने पदस्थितिः॥६॥

यथा—

हरिं सपत्नीनखचिह्नमारादुपेतमत्युत्सुकमानसाऽपि।
दृशा भृशोन्मीलितशोणभासा न काऽपि गोपी कलयाञ्चकार॥

अत्र 'न कलयाञ्चकार' इति वाच्यम्। अन्यथा, अपि तु सर्वा गोप्यः कलयाञ्चक्रुरिति विरुद्धबोधः प्रसज्येत। नञर्थस्य विधेयतया कलन-समभिव्याहार एव समुचितः। पदस्याऽस्थाने संनिवेशात्सर्वमेव

वाक्यं विवक्षितार्थप्रत्यायने शिथिलमित्यस्य वाक्यदोषता ।

**यस्मिन् दुरुच्चारमभव्यदायि लघ्वान्तिमाऽप्राप्तगुरुत्वमस्ति ॥**
**स्वरूपहीनं विगुणं रसानामश्रव्यवृत्तं हतवृत्तकं तत् ॥७॥**

अश्रव्य वृत्तं यस्मिन् तद्वाक्यं हतवृत्तम् । तत्तु पञ्चविधम् । दुरुच्चारं, नायकाद्यकल्याणकारि, पादान्ताऽप्राप्तगुरुत्वलघु, स्वरूपहीनं, रसाऽननुगुणं चेति ।

क्रमेणोदाहरणम् । यथा—

यदिह वपुषि स्वेदश्रेणी विसर्पति सर्वतः
खरतरमथ श्वास यत्त्वं मुहुर्मुहुरुज्झसि ।
कथय कथय क्षिप्रं तस्मात्सरोरुहलोचने !
किमभवदिहाऽद्य त्वदूदृष्ट्यध्वनो विषयो हरि' ॥

अत्र 'अभवदिहाऽद्य त्वदूदृष्ट्यध्वनः' इति दुरुच्चारत्वादश्रव्यम् ।

उअह सरवरे रेहइ अरुणअरच्छित्तपोम्ममिह सव्वं ।
मित्तविओउज्जाअसोणं णअणं व भिसिणीणं ॥*

अत्र प्रथमार्धे द्वितीयतृतीयौ सगणभगणौ नायकाद्यमङ्गलसूचकौ । पादान्ताऽप्राप्तगुरुत्वलघु द्विधा, विषमपादचतुर्थपादान्तभेदात् ।

विषमपादान्ताऽप्राप्तगुरुत्वलघु यथा—

विलसति गगने नवाऽम्बुदाली वहति शनैरनिलस्तरङ्गबन्धुः ।
सहचरि ! हितहेतवे वदामि तव न मनागपि मानकाल एषः ॥

अत्र 'वदामि'इति मिवर्णः । न च 'पादान्तस्थं विकल्पेन' इति सूत्रं समाधिरिति वाच्यम्, तस्य द्वितीयचतुर्थपादौ विषयः । यद्वा वसन्त-

---

* पश्यथ सरोवरे राजते अरुणकराक्षितपद्ममिह सर्वम् ।
मित्रवियोगोज्ज्वालशोण नयनं व बिसिनीनाम् ॥ ?
इतिच्छाया ( संशोधकः )

तिलकादिच्छन्दोविशेषः सूत्रस्य विषयः।

चतुर्थपादान्ताऽप्राप्तगुरुत्वलघु यथा—

मा सम्भावय मां गिरा मधुरया कुर्या न चित्तोत्सवं
वाताऽऽन्दोलविलोलपङ्कजदलद्रोहस्पृशा वा दृशा।
आयाते मयि यश्चकार भवती कृत्यौचितीसम्भ्रमं
तेनैवाद्य ममेन्दुसुन्दरमुखि! स्वात्मा महेन्द्रीयति॥

अत्राऽसंयुक्तयकारपरस्य पादान्तनिबन्धनगुरोरपि 'ति' वर्णस्य बन्धशैथिल्यकारितया न गुरुकार्यकारित्वम्। तस्मात् 'स्वात्मा कृतार्थीकृतः' इति 'मम' इत्यत्र 'मया' इति च वाच्यम्। छन्दोलक्षणहीनं वृत्तमत्यन्तवैरस्याधायकतया नोदाहृतम्।

हा जगदेकमनोहर! कान्त! हा कुलसागरचन्द्र! नरेन्द्र!।
हा गुणसार! सरोरुहनेत्र! काऽसमये गतवानसि निद्राम्॥

अत्र हास्यरसव्यञ्जकस्य दोधकवृत्तस्य करुणरसप्रतिकूलत्वाद्-श्रव्यत्वम्।

**पुनः पुनः प्रगृह्यादेर्विश्लेषः सकृदिच्छया॥**
**अश्लीलत्वं च कष्टत्वं सन्धेर्यत्र विसन्धि तत्॥८॥**

प्रकृतिवद्भावनिबन्धनो वारंवारमत्र संहितां न करोमीति पुनः स्वेच्छया सकृत्सन्धेर्विश्लेषोऽश्लीलत्वं कष्टत्वं चेति। आदिशब्दात् सूत्रान्तरेण सन्धेर्विश्लेषो गृह्यते। इत्यस्य पञ्च भेदाः।

क्रमेण यथा—

लोचने अम्बुजे एते इमे तारे अली पुनः।
चित्रं यदेतयोर्मध्ये केसराली न दृश्यते॥

अत्र प्रगृह्यनिबन्धनः सन्धेर्विश्लेषः।

बन्धकीवदनाऽम्भोजे विशन्तीव निशामुखे।
कदलीगर्भसदृशी उदियाय विधुद्युतिः॥

अत्र स्वेच्छया कृतो विश्लेष सकृदपि दोषः ।

चलण्डामररूपोऽसौ रणेऽभूदतिभीषणः ।
यमालोक्य हतच्छाया बभूवुरिह शात्रवः ॥

अत्र 'चलण्डामर'इत्यत्र 'बभूवुरिह'इत्यत्र च सन्धिकृताऽश्लीलता ।

कार्वीशेनाऽयमर्वाऽर्वाक् चार्वस्मिन् वेश्मनि स्वयम् ।
लिखितो मिषतः कस्मान्ममर्त इव भासते ॥

अत्र सन्धिकृत श्रोत्रकटुत्वरूपं कष्टत्वम् ।

विरचितशिशुभाव ईक्ष्यमाण. स्मितमधुरं व्रजसुन्दरीगणेन ।
विदधदतिमृदु. किशोरलीलामित इत एष उदार एति कृष्ण. ॥

अत्र 'इत इत.'इत्यादौ गुणः प्राप्तः 'पूर्वत्राऽसिद्धम्'इति सूत्रेण बाध्यते ।

**प्रथमार्धशेषवाचकपदं द्वितीयार्धसङ्गतं यत्र ॥**
**अर्धान्तरैकवाचकमभिदधते तत्सदा सुधियः ॥९॥**

स्पष्टम् ।

भूषण भास्वर देहे कुरु चन्द्रोऽयमुद्गतः ।
तादित्थं शिक्षिता सख्या मुदं याताऽभिसारिका ॥

अत्र 'चन्द्रोऽयमुद्गतस्तद्भास्वर भूषणं देहे कुरु' इत्यन्वयः । एवं च प्रथमार्धे द्वितीयार्धगततत्पदापेक्षा नावश्यकी । अर्थसामर्थ्यादेव तदर्थ-बाधः । प्रकृते तु अर्थापेक्षा । अधिकपदे तु न तदपेक्षेति भेदः ।

**वाक्यसमाप्तौ सत्यां यदुपात्तं तत्समाप्तपुनरात्तम् ॥**

यथा—

चिन्ताम्भोनिधिमन्दरो मृगदृशां दूतोपदेशः श्रुतौ
मानाशीविषबर्हिणो मनसिजक्षोणीरुहस्याङ्कुरः ।
अन्तर्मत्तगजेन्द्रकर्षणसृणिर्वंशीरव श्रीहरेः
कल्याण वितनोतु केलिनटनारम्भे मृदङ्गध्वनिः ॥

अत्र 'मृदङ्गध्वनिः' इति विशेषणदानात् समाप्तपुनरात्तता।

वाक्यं वाक्यान्तरे यत्र तद् गर्भितमुदाहृतम्॥१०॥

वाक्यमर्थादनुपयुक्तम्। यथा—

विलसति गगने नवाम्बुदाली वहति शनैरनिलस्तरङ्गबन्धुः।
सहचरि! हितहेतवे वदामस्तव न मनागपि मानकाल एषः॥

अत्र 'सह' इत्यादि 'वदामः' इत्यन्तं वाक्यं महावाक्यान्ते प्रविष्टमनुपयुक्तम्।

अभवन्मतयोगं तद्यत्र भवेदन्वयो नेष्टः॥

यथा—

यैर्न्यस्तास्तव विप्रयोगसमये वह्निस्फुलिङ्गोत्करा
मद्देहे मम ये बभूवुरनिशं हा! हन्त!! मूर्छाकृतः।
येषां वीक्षणमन्तकोपममभूत् कुन्देन्दुपाथोमुचां
नेत्रद्वन्द्वपथं गते त्वयि मम प्राणेश! ते शैत्यदाः॥

अत्र 'कुन्देन्दुपाथोमुक्'शब्देन यत्तच्छब्दानामन्वयः कवेरभिमतः। स च नोपपद्यते। तथा हि—यैरित्यत्र कुन्देन्दुपदार्थस्याऽविशेष्यत्वात्। ननु 'ये'इति 'येषाम्'इत्यनयोः परस्परमन्वयस्ततः 'कुन्देन्दुपाथोमुचाम्' इत्यनेन तत्पदार्थस्य विशेष्यतयोपादाने सत्युभयत्राऽन्वयः स्यादिति चेत् न, 'यैः' इत्यत्राऽनन्वयो भिन्नविभक्तितया तयोरनन्वयाच्च, विशेषणपदार्थयोः पराऽन्वयतात्पर्येणोपात्ततया परस्परमसम्बन्धाच्च।

यथा वा—

उत्सारयसि यत्तन्वि! मुखाद्वासो मनागपि।
मम लोचनयोरद्य तदा स्याच्चरितार्थता॥

अत्र 'यत्'इत्यस्य 'तदा'इत्यनेन सम्बन्धो न घटते। तस्मात् 'चेत्तन्वि'इति वाच्यम्। 'चेत्'इति पदस्य यदापदार्थकत्वात्।

यथा वा—

पाणिप्रवालशकलं तव पद्मरागः
कान्ते! पदद्वयमुरोजयुगं सरोजम्।
कण्ठस्तु कम्बुपुटकस्त्रिवलीतरङ्गो
लावण्यवारिनिधिशीतरुचिर्मुखं ते॥

अत्र 'वारिनिधि'शब्दस्य समासे गुणीभूतत्वात्तदर्थेन सर्वे प्रवालादयो न सम्बध्यन्ते। अविमृष्टविधेयांशे तु यदेवाऽनिष्टं तदेव दोषवत्। इह तु सर्वेषां प्रवालादिपदार्थानां तदङ्गत्वेनाऽप्रतीत्या सम्पूर्णवाक्यार्थवैकल्यमिति भेदः।

## यत्राऽऽरब्धा घटना निपतति पश्चात्पतत्प्रकर्षं तत्॥११॥

स्पष्टम्।

हे हस्तीन्द्रशिशो! न शोभनमिदं यत्कुञ्जकुक्षिं गत-
स्त्वं वीरुत्ततिमुत्क्षिपन् विहरसि प्रोद्दण्डया शुण्डया।
किञ्च क्षुद्रतमाः! कुरुध्वमधुना कोला! न कोलाहला—
नेतस्मिन् विपिने सुखं मृगपतिर्निद्रामितो वर्तते॥

अत्राऽऽरब्धबन्धस्य चतुर्थचरणे निपात.।

## पदस्य यस्य यत्रार्थे प्रसिद्धिस्तत्र तत्पुनः॥
## अतिक्रामति तां यत्र प्रसिद्धिधुतमाह तत्॥ १२ ॥

न चाऽवाचकेऽतिव्याप्तिरिति वाच्यम्। तात्पर्यगोचरधर्मप्रकारकप्रतीतेरस्य जनकत्वात्। कव्यनादरविषयत्वेऽपि प्रसिद्ध्यभावादप्रयुक्तोऽस्य भेदः।

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥

इत्यादिप्रसिद्धिमतिक्रामति यत्तत्प्रसिद्धिच्युतम्। यथा-

नद्यस्तुङ्गतरङ्गभीषणतया ध्वान्तावलीभिर्जग-
द्व्याप्तं वारिमुचां रवः सखि! महाघोरः फणी सर्वतः।
विद्युद्वीक्षणमात्रतोऽपहरते नेत्रं हठेनाऽधुना
यत्सान्निध्यमितः प्रयासि सुभगे! वन्दामहे तत्तपः॥

अत्र रवो नीचप्राणिध्वनिषु प्रसिद्धो, न तु मेघादिशब्देषु।

## कथितपदं तत्कथितं यत्पुनरुक्तिः प्रयोजनाऽभावे॥

यथा—

विकचसरोजोल्लासी रेवाकल्लोलकौतुकोल्लासी।
सहचरि! समीरणोऽय प्रसभ मम मानसं हरति॥

अत्र 'उल्लासि' शब्दः पुनरुक्तः। पुनरुपादानाप्रयोजनं विना 'पिष्ट-पेषण' न्यायेन न चमत्करोतीत्यस्य दोषत्वम्।

## न्यूनपदं तत्कथितं नाऽन्वयबोधः पदं विना यत्र॥१३॥

यथा—

करुणाकदम्बकयुता समर्पिता मयि यदा दृष्टिः।
किं मम तदा त्रिलोकीराज्यसुखैः पर्वतेन्द्रसुते!॥

अत्र 'दृष्टिः समर्पिता'इत्यत्र 'त्वया'इत्यनुपादानात् न्यूनता।

## अधिकपदं तत्कथितं यथाकथञ्चित्समन्वयो यस्य॥

यथा—

चन्द्राकारमनोहरं तव मुखं वाणी मधुस्पर्धिनी
पाणिः पल्लवसुन्दरस्तनुरसौ सौदामिनीबन्धुरा।
बाहुर्बालमृणालकोमलरुचिर्हास्य सुधासोदर
नो जाने सखि! कस्तपस्यति जनो यस्याऽऽलयं यास्यसि॥

अत्र मुखस्य चन्द्रोपमायां वाच्यायामाकारशब्दस्याऽवयवसंस्थानवाचकतया प्रकृताऽनुपयोगात् स्वरूपार्थकत्वं वाच्यमित्येव यथाकथञ्चित्समन्वयः ।

## अपदस्थसमासं तद्यत्राऽस्थाने समासविन्यासः ॥ १४ ॥

यथा—

युष्माकं ननु धर्षको निशि सुधाधामाऽयमुत्पश्यत
प्रातःकाल उपागतोऽयमधुना यायाद्विदूरं कियत् ।
इत्यन्तर्जनितप्रकोपविसराऽऽताम्रीकृताङ्गो रविः
पादाऽऽपातननिःप्रभीकृतविधुर्द्राग्बोधयत्यब्जिनी ॥

अत्र कविनिबद्धस्य क्रुद्धस्य रवेरुक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः ।

## वाक्यान्तरपदं वाक्ये यत्र सङ्कीर्णमाह तत् ॥

यथा—

शृणुष्व मल्ली कलकूजितानि प्रसूननम्रा पुरतः पिकानाम् ।
उत्कण्ठतेऽस्मिन् सखि! मे विधातुं तस्मान्निकुञ्जे हृदयं च किञ्चित् ॥

अत्र 'पिकानां कलकूजितानि शृणुष्व, पुरतः प्रसूननम्रा मल्ली, तस्मादस्मिन्निकुञ्जे मे हृदयं किञ्चिद्विधातुमुत्कण्ठते' इति योजना । क्लिष्टे तु प्रधानक्रियाभेदो न भवत्यत्र तु तद्भेदः स्फुटः ।

## प्रकृतस्य रसस्याऽस्ति विरुद्धो यत्र यो रसः ॥
## तद्व्यञ्जकोऽपरस्त्वर्थस्तच्चाऽमतपरार्थकम् ॥ १५ ॥

यथा—

रामेणात्मभुवा बाणैस्ताडिता सा निशाचरी ।
रक्तचन्दनसिक्ताङ्गी जीवितेशगृहानगात् ॥

अत्र व्यञ्जनावृत्तिलभ्योऽर्थः प्रकृतरसविरोधिनः शृङ्गारस्य व्यञ्जकः ।

## अनभिहितवाच्यमुदितं नोक्तिर्यस्मिन्नवश्यवाच्यस्य ॥

यथा—

शिशिरपयःसिक्तायाः सखीभिरिह ते तथाऽपि तन्वङ्गि ! ।
अपसरति नैव मोह. शिव ! शिव ! कठिनो वियोगाऽग्निः ॥

अत्र 'शिशिरपयःसिक्ताऽसि' इति सिक्तत्वस्य विधिर्वाच्यः। 'तथाऽपि' इत्यस्य द्वितीयार्धे प्रवेशो युक्तः ।

आत्मक्लेशनिदानं परिहर मानं सरोजाक्षि ! ।
न मयाऽपराधलवक कुतो भवत्याः कथ कोपः ॥

अत्र 'अपराधलवकोऽपि' इति अप्यर्थो वाच्यः। न्यूनपदे वाचकपदापेक्षा, इह त्वर्थापेक्षा । अपेस्तु द्योतकत्वादिति विशेषात् ।

## कारकादिक्रमो यत्र भग्नस्तद्भग्नप्रक्रमम् ॥ १६ ॥

आदिशब्दात् प्रकृतिप्रत्ययसर्वनामपर्यायोपसर्गक्रमा गृह्यन्ते ।

कारकस्य यथा-

भाङ्कारैर्मुखरीकरोति हरितो भृङ्गावली सर्वतः
कुञ्जेऽस्मिन्नवमाल्लिका विरचयत्यक्ष्णामभीक्ष्णं मुदः ।
रेवासङ्गमशीतलेन मरुता मोदो महान् जन्यते
सङ्गीतानि पिकी तनोति समयो मानस्य नाऽय तव ॥

अत्र सर्वत्राभिहितः कर्ता, 'मरुता' इत्यनभिहित कर्तेति भग्न. प्रक्रमः।

प्रकृतेर्यथा-

परदेशं प्रिये याते तद्वियोगासहिष्णवः ।
सत्वरं तेन साक मे धैर्यलज्जादयो गताः ॥

अत्र 'याते' इति याधातुप्रस्तावे 'गताः' इति गम्धातोरुपादाने भग्नः प्रक्रमः ।

न चैकपदस्य द्विः प्रयुज्यमानतया कथितपदत्वं दोष इति वाच्यम् । तस्योद्देश्यप्रतिनिर्देश्यातिरिक्तविषयत्वात् । उद्देश्यप्रतिनिर्देश्यादिस्थले तु तस्यैव पदस्य सर्वनाम्नो वा प्रयोग आवश्यकः । तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।

इत्यादौ 'रक्त एव' इति पदान्तरेण स एवार्थः प्रतिपाद्यते तदाऽन्योऽर्थ इव भासमान प्रतीतिस्थगनं करोति । एवं प्रत्ययादीनामत्यन्तदूषकत्वाभावादुदाहरणं न दत्तमन्यत्राऽनुसन्धेयम् ।

यस्य यत्र प्रयोगोऽस्ति व्युत्पन्नस्तु ततोऽन्यतः ॥
प्रयोगः क्रियते तस्य तदक्रममुदाहृतम् ॥ १७ ॥

यथा—

यद्दत्ताः शपथा विलोचनपथादन्यत्र सन्निर्गमे
तुभ्य सभ्य ! मदर्थमालिनिवहैर्यद्वा भवानर्थितः ।
यत्किञ्चित् खलु वाञ्छित हृदि मया चोत्कण्ठया नेत्रयो
रागेणाऽद्य तथाऽन्वमीयत यथा तत्सर्वमापूरितम् ॥

अत्र 'यच्च किञ्चित्' इति वाच्यम् । चादिशब्दा यत्समभिव्याहृना तद्गतमेव स्वार्थं बोधयन्तीति दिक् ॥

इति श्रीमैथिलश्रीगङ्गानन्दकवीन्द्रकृतौ
काव्यडाकिन्यां तृतीया दृष्टिः ॥



अथाऽर्थदोषानाह—

अपुष्टव्याहतक्लिष्टपुनरुक्तनिर्हेतुताः ॥
सन्दिग्धदुःक्रमाऽस्थानयुक्तत्वान्यनवीकृतिः ॥ १ ॥
ख्यातिविद्याविरुद्धत्वे प्रकाशितविरुद्धता ॥
साकाङ्क्षता सहचरभिन्नता विध्ययुक्तता ॥ २ ॥
अविशेषे विशेषश्चाऽनियमे नियमस्तथा ॥
तयोर्विपर्ययौ त्यक्तपुनःस्वीकृतता तथा ॥ ३ ॥
अयुक्तताऽनुवादस्य ग्राम्यताऽश्लीलता तथा ॥
एवमर्थेषु दोषाः स्युस्त्रयोविंशतिसङ्ख्यकाः ॥ ४ ॥

क्लिष्टत्वं कष्टत्वम् । ख्यातिः प्रसिद्धिः । तयोर्विपर्ययौ विशेषेऽविशेषः, नियमेऽनियमश्च ।

तत्र-

मुख्यार्थाऽनुपकारित्वमपुष्टत्वं द्विधा च तत् ॥
अत्यन्ताऽनुपयोगित्वं तथा लब्धत्वमन्यतः ॥ ५ ॥

तदर्थोपस्थितिमन्तरेण प्रकृतार्थविघाताभाव इत्यपुष्टत्वमर्थस्य । तच्चाऽत्यन्ताऽनुपयोगित्वाऽन्यथालब्धत्वरूपं भेदद्वयमवगाहते ।

उभयं यथा-

उष्णानल इव सुमुखीमालिङ्गति तां भवद्विरहः ।
रविकरविकसितकमलं यथा तदङ्गेषु भस्मसाद्भवति ॥

अत्र 'अनल' इत्युक्तौ औष्ण्यप्रतीतेरुष्णशब्दोऽन्यथालब्धार्थो, 'रवी'त्यादिकमलविशेषणमत्यन्ताऽनुपयोगि-इत्येतदुभयमपुष्टार्थम् ।

अनुत्कर्षेण यस्त्यक्त उत्कर्षमधिरोप्यते ॥
तत्राऽर्थे व्याहतत्वं स्यात् ।

'अनुत्कर्षेण'इत्युपलक्षणम् । उत्कर्षेणोपात्तो योऽनुत्कर्षं सोऽधिरोप्यते तत्राऽपि व्याहतत्वम् ।

प्रथम यथा—

लोकानन्दनहेतवे जगति ते तिष्ठन्तु पाथोरुह—
श्रीखण्डद्रवचन्द्रिकेन्दुकलिकाचैत्रानिला निर्मलाः ।
अस्माक तु सखे ! कलानिधिकला यत्सा दृशोर्गोचर
याता, हन्त ! स एव सम्प्रति मम त्रैलोक्यराज्योत्सवः ॥

य प्रत्यनुत्कृष्टा चन्द्रकला, स एव कलानिधिकलात्वमुत्कर्षमाधिरोपयतीति व्याघातः ।

द्वितीय यथा—

करोति चन्द्रिका सा मे मोद नेत्रचकोरयोः ।
न पुनश्चन्द्रिकापूर्णशरत्पीयूषरोचिषः ॥

अत्र येन चन्द्रिका उत्कर्षायोपात्ता, तस्य चन्द्रिकाऽनुत्कृष्टेति व्याहतम् ।

## कष्टत्वं च दुरूहता ॥ ६ ॥

स्पष्टम् ।

यैर्दृष्टा हिमकृत्सुताजलरुचिस्तेषां कलङ्काऽघसां
यत्सवीक्षणमस्ति नैव तदभूत्तस्याः प्रभावोदयः ।
यैः पीता पुनरान्तरेण नयनेनाऽत्यन्तसन्तोषिणां
तेषां किं न कवित्वकैरवकुलं लोके प्रकाशं व्रजेत् ॥

अत्र हिमकृत्सुता रेवा तज्जलरुचिर्यैर्दृष्टा तेषां कलङ्करूपपापानां यद्वीक्षणं तत्कलङ्किनो विधोस्तत्पितुः न प्रभावः। अपि तु तस्या एव । यैः पुनरान्तरेण चक्षुषा पीता तेषां चन्द्रतनयाजलरुचिसम्बन्धात्क-

वित्वरूपकैरवकुलं किं न प्रकाशं व्रजेत्,इति दर्शनेषु न चन्द्रस्य गुण-स्तत्र रेवामाहात्म्यमेव पानेषु तस्य गुण इत्यर्थो दुरूहः।

## पुनरुक्तत्वमर्थस्य यत्राऽर्थस्य पुनर्ग्रहः॥

तत्तु द्विविधं पदार्थवाक्यार्थभेदात्। क्रमेण यथा—

रे रे पाप! दशास्य! तस्करपते! रे मेघनादादयो!
वाणीमत्र शृणुध्वमुद्धटतमां सत्यामिमां सङ्गरे।
आज्ञां श्रीरघुनन्दनस्य शिरसा लब्धाऽद्य लङ्कामितो
युष्माभिः सह रावणेन सहितां द्रागुत्क्षिपाम्यम्बुधौ॥

अत्र 'रेरे दशास्य'इति 'युष्माभिः' इति चोक्ते सति रावणपदार्थः पुनरुक्तः।

स्थितवति रणभूमौ सन्धुनाने धनुर्ज्यां
रजनिचरचयानामन्तके राघवेऽस्मिन्।
अलमलमतिभीत्या रामभद्रे कपीन्द्राः!
समरभुवि सचापे किमिव वो भयं स्यात्॥

अत्र द्वितीयवाक्यार्थः पुनरुक्तः।

## निर्हेतुत्वं भवेत्तत्र हेतुर्यत्र न चोच्यते॥ ७॥

अर्थात् कार्ये कथिते हेत्वनुक्तिः। न च विभावनालङ्कारऽतिव्याप्तिरिति वाच्यं, तत्र प्रसिद्धहेतुनिषेधो हेत्वन्तरविभावन,मत्र तु हेत्वनभिधानमेव। यथा—

पूर्वं यस्य वधाय वानरपतेरग्रे प्रतिज्ञा कृता
श्रीरामेण वशं गतोऽपि समरे स त्वत्पिता रावणः।
जीवन्नेव मयोज्झितो हनुमता काकुत्स्थभक्तात्मना
त्वामप्यद्य न हन्मि पश्य सपदि त्वं जीवलोकानिमान्॥

अत्र रावणस्य हननाभावे हेतुरुक्तो न पुनरिन्द्रजितः। यद्यप्यत्र लक्ष्मणप्रतिज्ञारूपहेतुविभावन, तथाऽपि प्रसिद्धहेतुनिषेधाभावान्न तत्राऽतिप्रसङ्गः।

## सान्दिग्धत्वं भवेत्तत्र यत्राऽर्थस्य तु संशयः ॥

यथा—

विज्ञाय प्रश्नतात्पर्यं निर्द्धारयतु कोविदः ।
पादा गिरेः किमासेव्या किं वा ललितयोषिताम् ॥

अत्र प्रकरणाभावे शृङ्गारी वक्ता किं शान्त इति सन्देहः।

## लोकशास्त्रक्रमत्यागो दुःक्रमत्वमिहोच्यते ॥ ८ ॥

लोकसिद्धक्रमत्यागात् शास्त्रसिद्धक्रमत्यागाच्च द्विविधमर्थस्य दुःक्रमत्वम्। यथा–

हृदयेन्द्र! महाबाहो! लाजाविजयराजित!।
राजती शतमुद्री मे कानकी वा प्रदीयताम् ॥

अत्र कानकयभावे राजतीयाचनमिति लोकसिद्ध. क्रमस्तस्य तु त्यागः। यथा वा–

कारयित्वा सुतस्यैष यज्ञसूत्रपरिग्रहम् ।
याति प्रष्टुं तिथिं विप्रो ज्योतिःशास्त्रविशारदम् ॥

अत्र शास्त्रविरुद्धक्रमत्याग.।

## अस्थानयुक्तताऽर्थानामस्थान उपसंहृतिः ॥

यथा—

शम्भोः शस्त्रपरिग्रहः प्रतिपलं युद्धाभिलाषोदयो
वीर्यं सयति कार्तिकेयतुलितं क्रौञ्चाद्रिभेत्ता शरः ।
तद्योगो भगवानयं भृगुपतिर्बाह्वोर्ममैवाऽनयो–
र्विप्रश्चेन्न भवेदहो! बलवतां तुल्यो महादुर्लभः ॥

अत्र 'विप्रश्लेषेन भवेत्'इत्येतावतैव समाप्ते वाक्यार्थे'अहो बलवतां'इत्यादिरस्थान एवोपसंहार' प्रकृतार्थप्रातिकूल्यमाचरतीत्यर्थस्याऽस्थाने सम्बन्धः।

## भङ्ग्यन्तरनवीकारत्यागोऽर्थस्याऽनवीकृतिः ॥ ९ ॥

यथा—

सर्वदा सहजो बन्धु सर्वदा वाति मारुतः।
सर्वदा दुर्जनो दुःखी सर्वदा सुजनः सुखी ॥

अत्र 'सर्वदा सर्वदा' इत्यनवीकृतत्वम्। न च कथितपदसङ्करः। अत्रपर्यायान्तरेणोपादानेऽप्यनवीकृतिस्तत्र तु पदाऽभेद इति भेदः। किञ्च कथितपदे नि प्रयोजनपुनर्वचनता, इह तु बन्धुतादीनां दार्ढ्यरूपप्रयोजनसत्त्वात्। अत एव नाऽर्थपुनरुक्ति। यथोचित तथोदाह्रियते—

सर्वदा सहजो बन्धुर्मारुतो वात्यहर्निशम्।
न कदाप्यसुखी साधुः सततं दुःखभाक् खल ॥

इत्यनया भङ्ग्या स एवार्थ' प्रतिपादयितुमुचितः।

## देशादिभेदतः पञ्चविधा ख्यातिविरुद्धता ॥

आदिशब्दात्कविलोकस्वभावकाला गृह्यन्ते।

पृथिव्यां सारभूताऽस्ति मिथिला नाम सा पुरी।
यत्रोद्यानधरा भाति कुङ्कुमस्तबकोद्गमै' ॥

अत्र मिथिलायां कुङ्कुमसम्भव इति देशविरुद्धता।

चरणस्तव तन्वङ्गि! कामदो नात्र सशय'।
अङ्कुरो यस्य सम्बन्धी दृश्यतेऽशोकशाखिनि ॥

अत्र कामिनीपादप्रहारेणाऽशोकस्य कुसुमोद्गमः कविषु प्रसिद्धो न पुरङ्कुरोद्गमः। लोकविरुद्धोऽपि कविप्रसिद्ध्या न दोषः।

यथा मम भ्रातृचरणानां रघुदेवशर्मणाम्—

शैलाः कैलासलास्यं दधति जलधरास्तन्वते सौधसौख्यं
तालीशोभां वनाली वहति तुलयति स्वःपतीभं मदेभः।
त्वत्कीर्त्या श्रीप्रतापस्फुरदमलरुचा जायते किञ्चिदन्यत्
क्षोणीन्दो! क्षीरसिन्धोः परिणतसुषमां सागराः शीलयन्ति॥

अत्राऽमूर्तायाः कीर्तेः सम्बन्धाज्जलधरादयो व्यक्त धवलीभवन्तीति कविप्रसिद्धिः।

न कर्तव्यैव मन्मुष्टाविन्द्रशूल इवाऽऽत्मधीः।
स्फोटयिष्यामि येनाऽद्य शक्राजित्तव मस्तकम्॥

अत्र शक्रस्य शूलमस्त्रं लोकेषु न प्रसिद्धमिति लोकविरोधः।

तथा व्यालोलिता भृङ्गैर्लतानां कलिकावली।
मधुवृष्ट्या यथा मूले पूरयामास सारणीम्॥

अत्र कलिकानां मधुबाहुल्यं स्वभावविरुद्धम्।

मा‍ध्यपुष्पाणि सन्त्यज्य निपतन्ति समुत्सुकाः।
मालतीस्तबके सद्यः शिशिरे समयेऽलय.॥

अत्र शिशिरे मालतीकुसुमोद्गम इति कालविरुद्धम्।

## तत्तच्छास्त्रविरुद्धत्वं भवेद्विद्याविरुद्धता॥१०॥

यथा—

ब्राह्मणः शास्त्रपाठेन गमयित्वाऽखिलं दिनम्।
सन्ध्याकाले पितुर्यज्ञमेकोद्दिष्ट करोत्यसौ॥

अत्रैकोद्दिष्टस्य श्राद्धस्य सन्ध्याकाले धर्मशास्त्रेण विधानं नोक्तम्।

यथा वा—

मा गोपय सरोजाक्षि! रहस्यं मम सन्निधौ।
बिम्बाधरे तवैतस्मिन् दृश्यते नखरक्षतम्॥

अत्राऽधरे नखरक्षतं कामशास्त्रविरुद्धम्। एवमन्येष्वपि शास्त्रेषु विरोधो विभावनीयः।

प्रकाशितविरुद्धत्वं प्रकाश्याऽर्थविरुद्धता ॥

यथा—

यथा दूरं व्रजत्येषा कीर्तिर्हृदयभूपतेः।
तथा तथाऽतिविस्तीर्णा गिरेरिव महानदी ॥

अत्रोपमया कीर्तेः सर्वव्यापित्वरूपः प्रकाश्यार्थो विरुध्यते। विरुद्धमतिकारितायास्तु शब्दस्य विरुद्धत्वमिह त्वर्थस्येति भेदः।

अप्राप्तपदतात्पर्यगोचरप्रातियोगिता ॥ ११ ॥
यत्रार्थस्य भवेत्तत्र साकाङ्क्षत्वं विदुर्बुधाः ॥

अप्राप्तमनुपस्थितं यत्पदं तत्तात्पर्यगोचरान्वयप्रातियोगी यत्रार्थ इत्यर्थः। यथा—

क्रीडावेश्मनि कारितं नृपतिना द्यूतं स्वमध्ये पुन-
र्यद्गान्धारनृपेण तत्र रचितो व्याजस्ततोऽपि क्षमा।
पाञ्चालीचिकुरावकर्षणमितस्तं चाऽपमानं निजं
राज्यं चात्मसमं कथं नरपतिर्भीमाग्रजो मृष्यते ॥

अत्र राज्यमित्युपेक्षितुमित्याकाङ्क्षति।

स्यात् सहचरभिन्नत्वं भणितिर्महता सहाऽसतां यत्र ॥१२॥

इदमुपलक्षणम्। अमहता सह महतामभिधाने बोध्यम्। यथा—

हंसो मन्थरसञ्चारैः काकः शकुनसूचकैः।
कोकिला मधुरालापैराचारैर्भाति भूसुरः ॥

अत्र हंसादिभिरुत्कृष्टैः सह काकस्य कथनम्।

यथा वा—

तपात्ययेन मण्डूका मूषकाः सस्यवृद्धितः।
मीना जलोदयात्सन्तो मोदन्ते तीर्थसन्निधेः ॥

 

अत्र मण्डूकादिभिरपकृष्टै सह सतामभिधानम् ।

## अविधेयस्य विधानं यत्र भवेत्तत्र विध्ययुक्तत्वम् ॥

यथा—

पूर्वं यद्विबुधास्त्वया निजगृहाद्दुष्टेन विद्राविता
भग्नो यश्च वने वने प्रतिपल व्यूढो मुनीनां मख' ।
सम्प्रत्युग्रतपस्विनीं यदहरः सीतामभीतस्ततः
पश्यानन्दितराघवो दशमुख ! त्वां सङ्गरे हन्म्यहम् ॥

अत्र 'त्वां हत्वा राघवमानन्दयिष्यामि'इति विधेयम् । अविमृष्टविधेयांशे तु पदयोर्व्युत्क्रमाद्विधेयस्य वैपरीत्येन विधानमिह त्वविधेयस्येति विशेष. ।

अविशेषे विशेषो यथा—

रे रे राक्षसराजपुत्र ! समरे मायाऽवरुद्धोऽधुना
श्रीरामानुचरानिहोपहससि त्वां धिग्वृथा जीवितम् ।
किं नो वेत्सि हनूमता बलवता येषां पुरोगामिना
दग्धान्त.पुरगोपुरावधिपुरी लङ्काऽद्य वः पश्यताम् ॥

अत्र 'येषामेकेन पुरोगामिना' इत्यविशेषो वाच्यो, न तु 'हनूमता' इति विशेष. ।

अनियमे नियमो यथा—

भीमस्ते युधि विक्रमो दिशि यशोराशिस्त्वदीयोऽर्जुन-
स्त्वत्सारोऽस्ति युधिष्ठिरो धनचयो नासत्यजन्माऽभवत् ।
कुन्ती योधगणः क्षितीश ! भवतः कृष्णैव केशावली
मन्ये पाण्डवमण्डलीपरिवृतो भूमौ भवान् वर्तते ॥

अत्र 'कृष्णैव'इति नियमाऽभिधानं न कर्तव्यम् ।

विशेषे सामान्य यथा—

धम्मिल्लोपरि सन्निवेशय सितां मालामिमां यत्नतः
श्रीखण्डद्रवलेपनं कुरु कचे हारं हृदि स्थापय ।

वासस्त्वं परिधेहि भास्वरतम चित्ते भयं मा कृथा
गच्छन्त्याः सरणौ निशैव सखि ! ते सर्वं समाधास्यति ।

अत्र 'निशा' इत्यत्र 'ज्योत्स्नी' इति विशेषो वाच्यः ।

नियमेऽनियमो यथा—

यः क्षोणीपतिभिर्ललाटफलके सानन्दमाधीयते
यद्दानेन पुरन्दरप्रभृतयस्तुष्यन्ति नाकौकसः ।
तस्याऽद्य प्रियचन्दनस्य शबरीगेहान्तरे सौरभ-
श्रीखण्डीकृतनीरसेन्धनचये तत्रेन्धनत्वं वरम् ॥

अत्र 'सौरभमात्रश्रीखण्डीकृत' इत्यादिनियमो वाच्यः।

नन्वनभिहितवाच्यत्वादस्य दोषस्य को भेदः । तत्राऽवश्यवक्तव्याऽनभिधानमिह तु तदेवेति चेत् न, अस्य दोषस्य पृथग्भावे नियमाऽनभिधानमेव नियामकम् । न न्वेव सत्यनयोः शब्दार्थगतत्वे किं मानमिति चेत्, उच्यते-शब्दोच्चारणाऽनन्तरमेवाऽनभिहितवाच्यत्वस्य प्रतिभानम्,इह त्वर्थप्रत्ययाऽनन्तरमिति भेदः । एव चाधिकपदत्वादेरनियमपरिवृत्तौ विशेषो बोध्यः । यदाहु –

'यो दोषः शब्दपरिवृत्त्यसह. स शब्ददोष एव । यश्च पदार्थान्वयप्रतीतिबोध्यः सोऽपि शब्ददोषः । यश्चाऽर्थप्रतीत्यनन्तरं बोध्यः सोऽर्थाश्रय.' इति ।

त्यक्तपुनःस्वीकृतता यथा—

निजालयं धराधीश ! कीर्तिमारोपयाम्यहम् ।
नियोगं सत्वरं देहि तया स्तान्मे सितं गृहम् ॥

अत्र 'नियोग सत्वरं'इत्यादिना समापितमपि 'तया'इत्यादिना पुनः स्वीकृतम् । यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवाऽसियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽय न किञ्चिद्गणयति विदितं तेस्तु तेनाऽस्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधि यस्य कीर्तिः ॥

अत्र 'विदितं तेऽस्तु'इत्यादिना समापितमपि 'तेन' इत्यादिना पुनः स्वीकृतम् ।

अनुवादस्याऽयुक्तता यथा—

सरोभूषण ! भृङ्गालिपरमप्रीतिवर्धन ! ।
वियोगिप्राणकाल ! त्वं वद पद्म ! क सा प्रिया ॥

अत्र 'वियोगिप्राणकाल'इत्यस्यार्थो नाऽनुवाद्यः ।

ग्राम्यता यथा—

तत्रैवास्तरणे भार्ये ! स्वपिम्यहमनुक्षणम् ।
तद्वद्धि· कुरु वासस्त्वमूरुयुग्मं विकासय ॥

अत्र ग्राम्योऽर्थः ।

अश्लीलता यथा—

वैदग्ध्यविदुषां पुंसां साङ्कुरस्य सुखावहा ।
यथा कर्कशता प्रायो न तथैवाऽऽर्द्रता पुनः ॥

अत्र स्त्रीव्यञ्जनस्य प्रतीतिरित्यश्लीलता ॥

इति श्रीमैथिलश्रीगङ्गानन्दकवीन्द्रकृतौ
काव्यडाकिन्यां चतुर्थी दृष्टिः ॥



अथ रसदोषानाह—

स्वशब्देन रसस्योक्तिः सञ्चारिस्थायिनोरपि ॥
परिग्रहो विभावादेर्विरोधिरसवर्तिनः ॥ १ ॥
अतिकृच्छ्रादभिव्यक्तिरनुभावविभावयोः ॥
अङ्गिनोऽननुसन्धानं तथा दीप्तिः पुनः पुनः ॥ २ ॥
अकाण्डे प्रथनच्छेदावनङ्गपरिकीर्तनम् ॥
अङ्गस्याऽत्यन्तविस्तारः प्रकृतीनां विपर्ययः ॥ ३ ॥
एतादृशो रसे दोषाः सुधीभिः परिकीर्तिताः ॥

रसस्य रसशब्देन शृङ्गारादिशब्देन वा कथनं दोषः। यथा—

दरस्मेरसरोजाक्षीं पश्यतः पुरतो मम ।
विषयेभ्यो रस. कोऽपि न्यवर्तयत मानसम् ॥
यदा हरिणशावाक्षी मदन्तिकमुपागता ।
सखे ! तदानीमभवं शृङ्गारमयमानसः ॥

व्यभिचारिणः स्वशब्देन कथन यथा—

आक्रम्य विषमं वर्त्म समायाताऽपि सन्निधिम् ।
आलिङ्गने सलज्जाऽभूत्प्रियस्य मृगलोचना ॥

अत्र 'सलज्जा' इत्यत्र 'विनम्रा'इति वाच्यम् ।

स्थायिनः स्वशब्दवाच्यत्वं यथा—

सीतापहारगर्विष्ठे रूक्षं जल्पति रावणे ।
बभूव समरे क्रोधः सद्यः पवनजन्मनः ॥

अत्र क्रोध. स्थायी। रसाद्युपस्थितिरनुभावद्वारैव चमत्करोति, न पुन. स्वशब्देनेत्यस्य दूषकताबीजम् ।

प्रतिकूलविभावव्यभिचारिग्रहो यथा—

नवघननिचिते गगने प्रणतिपरे प्राणनाथेऽस्मिन् ।
विधुमुखि ! भव प्रसन्ना न पुनः समुपैति निर्गतः समयः ॥

अत्र शृङ्गारप्रतिकूलस्य शान्तस्याऽनित्यत्वप्रकाशनरूपो विभावस्तद्व्यञ्जितश्च निर्वेदो व्यभिचारी गृहीतः । निर्वेदस्य प्रातिकूल्यं शान्तस्थायित्वप्रतीत्यैव, न तु शृङ्गारव्यभिचारित्वेन ।

प्रतिकूलानुभावग्रहो यथा—

प्रच्छन्ने दृक्पथ याते दयिते गुरुसन्निधौ ।
सर्वं सद्मनि सन्त्यज्य वन व्रजति सुन्दरी ॥

अत्र सर्वसन्त्यागो वनगमनं च शान्तानुभावौ इन्धनाद्याहरणच्छलाभावात् शृङ्गारस्य प्रतिकूलौ ।

अनुभावस्य कष्टव्यक्तिर्यथा—

वहति पटीरसमीरे नवजलधरबन्धुरे नभसि ।
किञ्चिदुदञ्चिन्नयना दृष्टिपथं सा गता यूनः ॥

अत्र शृङ्गारस्य पटीरसमीरादिरूपोद्दीपनविभावनायिकारूपालम्बनविभावावनुभावाऽपर्यवसायिनौ स्थिताविव्यनुभावस्य कष्टकल्पना । न च 'किञ्चि'दित्यादिनाऽनुभावकथनमिति वाच्यम, यन्निष्ठो रसस्तन्निष्ठानुभावस्य वक्तव्यत्वादिह तु नायकनिष्ठे रसे तन्निष्ठानुभावस्य कथनाभावात् 'किञ्चि'दित्यादिना नायिकानिष्ठानुभावकथम् ।

विभावस्य कष्टव्यक्तिर्यथा—

बहुशो विलुठति मोहं व्रजति रति द्रागपाकुरुते ।
अयमतिविकलः सम्प्रति करोमि किं तन्न जानीमः ॥

अत्र विलुठनादीनां करुणादावपि सम्भवात् कामिनीरूपस्य विभावस्याऽतिकृच्छ्रादभिव्यक्तिः ।

अङ्गिनोऽननुसन्धानं यथा रत्नावल्या चतुर्थेऽङ्के बाभ्रव्यागमने सति सागरिकाया विस्मृति' ।

दीप्तिः पुनः पुनर्यथा कुमारसम्भवे रतिप्रलापे ।

अकाण्डे प्रथनं यथा वेणीसहारे द्वितीयेऽङ्के ऽनेकसङ्क्षये वृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णने ।

अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढेऽन्योन्यसंरम्भे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ।

अनङ्गपरिकीर्तनं यथा मम मन्दारमञ्जर्यां राज्ञः स्वय कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णनप्रशंसनम्।

अङ्गस्याऽत्यन्तविस्तारो यथा किरातार्जुनीये सुराङ्गनाविलासादिः।

प्रकृतयो दिव्या अदिव्या दिव्याऽदिव्याश्च धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः। वीररसप्रधानो धीरोदात्तः। रौद्ररसप्रधानो धीरोद्धतः। शृङ्गाररसप्रधानो धीरललितः। शान्तरसप्रधानो धीरप्रशान्तः। एते चोत्तममध्यमाऽधमाः। एतेषु यो यथाभूतस्तस्याऽन्यथावर्णने प्रकृतिविपर्ययो दोषः। अत एवाऽनर्घ्यराघवे रामायणसिद्धः प्रहर्ता श्रीरामस्तं परिहृत्य 'काणीचकार चरम' इत्यादिना लक्ष्मणेन काकोपरि ब्रह्मास्त्रप्रयोगः कृत इत्युपनिबद्धम्। अन्यथा वीररसप्रधानस्य रामस्य तादृशकर्मवर्णने प्रकृतिविपर्ययो दोषः स्यात्।

'एतादृशः' इति। कान्तापादप्रहारेण कान्तस्य कोपवर्णनादिरूपा इत्यर्थः। यथा—

नमयन्नेव मूर्धानं मनस्विन्या हतः पदा।
अत्यन्तारुणदृक्कान्तो बभूव स्फुरिताधरः॥

इत्यादि।

पूर्वोक्तानपि दोषान्नाऽतिक्रामन्त्यलङ्कृतेर्दोषाः ॥४॥

'पूर्वोक्ता'निति। शब्दार्थगतानित्यर्थः। तथा हि—

प्रसिद्ध्यभावो वैफल्यं तथा वृत्तिविरोधिता॥
अनुप्रासगता दोषास्त्रय एते प्रकीर्तिताः ॥ ५ ॥

अनुप्रासस्य प्रसिद्ध्यभावो दोषः प्रसिद्धिविरुद्धत्वेन गतार्थः। वैफल्यं पुनरपुष्टार्थत्वेन गतार्थम्। वृत्तिविरोधस्तु प्रतिकूलवर्णत्वेन

लब्धार्थः । क्रमेण यथा—

कर किरीटी वदनं विवस्वान् पदं पृथा चक्षुरपि क्षपेशः ।
रूप रमा यस्य यमो यशांसि स्तौति स्तवै', सोऽस्तु हरिर्हिताय ॥

अत्राऽनुप्रासानुरोधेन स्तुतिः कृता, न पुनः पुराणादिना तथा कथितमस्तीति प्रसिद्धिविरोधः ।

करकलितकनककङ्कणनिक्वाणः कर्णयोरनयो' ।
सहचरि ! सहजमनोहरचरणे ! किं सौख्यमाख्याति ॥

अत्र विवक्षितविवेकेन वाच्यार्थस्य न काऽपि चारुतेत्यपुष्टार्थतै· वाऽनुप्रासस्य वैफल्यम् ।

कष्टमिष्टेन संश्लिष्टा स्पष्टदष्टौष्ठसम्पुटा ।
दृष्ट्वा निश्चेष्टयाऽचष्ट बिम्बौष्ठी नष्टचेष्टताम् ॥

अत्र श्रुत्युद्वेजकवर्णन्यास शृङ्गारे न युज्यत इत्युपनागरिकावृत्ति· विरोधः ।

हरिणायतनेत्राणां हरिणा वशिकास्वनैः ।
हृते चित्ते बभुवुस्ता हरिणाननकान्तयः ॥

अत्र यमकस्य पादत्रयगतत्वेन यमनं दोषः, सोऽप्रयुक्तत्वेन गतार्थः ।

परिमाणजातिगतं न्यूनत्वमधिकत्व वा यत्रोपमायामुपमानस्य, तत्र सहचरभिन्नत्व दोषः । क्रमेण यथा—

प्रालेयभूभृतः शैत्यमासीच्चन्दनबिन्दुवत् ।
चाण्डाल इव कर्माणि कृतवानसि साम्प्रतम ॥
रसातलसमा नाभिः सुमेरुसदृशौ स्तनौ ।
भूचक्रसन्निभा श्रोणी त्रैलोक्य तव जृम्भते ॥
चक्रवाकोऽयमध्यास्ते पद्मासन इवाम्बुजम् ।

इत्यादावमहद्भिः सह महतां महद्भिः सहाऽमहतां चौपम्याभिधानं सहचरभिन्नत्वपर्यवसन्नम् ।

उपमाप्रयोजकसाधारणाश्रयत्वे न्यूनाधिकत्वे न्यूनपदत्वाधिकपदत्वयोरन्तर्भवतः। क्रमेण यथा—

कर्णोल्लसद्भास्वरकुण्डलाभ्यां नेत्राञ्जनेनाऽऽस्यमिदं त्वदीयम्।
शरन्निशानाथ इवाऽवभाति पार्श्वस्थिताभ्यां गुरुभार्गवाभ्याम्॥

अत्रोपमानस्य नेत्राञ्जनस्थानीयो लाञ्छनरूपो धर्मः केनाऽपि प्रकारेण नोक्त इति हीनपदत्वम्।

तं पयोदमिव वीक्ष्य सशम्पं वेपमानकमनीयकलापाः।
ताण्डवानि विदधुस्तरुखण्डे दण्डकाननशिखण्डियुवानः॥

अत्रोपमेयदिशि सीताया अनुपादानात् शम्पाग्रहणमतिरिक्तमित्यधिकपदत्वम्।

लिङ्गवचनभेदेऽपि उपमानोपमेययोः साधारणो धर्मश्चेदसाधारणः क्रियते, तदा तद्धर्मस्योपमानोपमेयान्यतरान्वयः। विशेषणसहितस्योपमानत्वमुपमेयत्वं वाऽध्याहारेणाऽप्यन्वयो धर्मस्य चेत्तदा तद्विशिष्टस्योपमानत्वाद्यस्फुटमित्येव क्रमभङ्ग इत्यस्य भग्नप्रक्रमत्वेऽन्तर्भावः।

यथा—

यत्तारुण्यतरङ्गिताम्बुजदृशो मध्यस्थलीवाऽस्फुटं
यत्प्राणा इव कामिनोः कुलभुवोरद्वैतमभ्यागतम्।
अश्रान्ताकुलकान्तकेलिविगलत्काञ्चीत्रयं निर्गुणं
ज्ञेयं यत्र कुलाङ्गनाप्रणयवद्वन्दामहे तन्महः॥

अत्र स्त्रीलिङ्गावरुद्धोपमाने अस्फुट इति नाऽन्वेति। 'अभ्यागतम्' इत्यस्याऽपि बहुत्वावरुद्धोपमानेऽनन्वयः।

यत्तु 'इष्टः पुन्नपुंसकयोः प्रायेण' इति सूत्रेण वामनाचार्येण लिङ्गवचनभेदस्याऽदोषत्वमुक्तं, तत्तिङन्तपदप्रतिपाद्यसाधारणधर्मान्वये बोध्यम्। तेन 'चन्द्र इव मुखं भाति' 'पास्यामि वदनं तस्याः पुष्पं मधुलिहो यथा' इत्यादि सङ्गच्छते।

श्लेषमर्यादया यत्र पदं साधर्म्यवाचकम् ॥
उभयान्वयि तत्राऽपि नाऽस्य दोषस्य संस्थितिः ॥ ६ ॥

वाचा सुधामुचा भासि करेणेव सुधाकरः ।

इत्यादावुपमानोपमेययोर्लिङ्गवैषम्येऽपि 'सुधामुचा' इति विशेषणमुभयत्राऽन्वेतीत्यस्खलितैव धीरुत्पद्यते ।

नीलरूपभृतः केशो निरानन्दितबर्हिणः ।
दधते तन्वि ! ते शोभां नूतना जलदा इव ॥

अत्र 'दधते' इति रूप दध्धारणधातोरेकवचनान्तं दधातेश्च बहुवचनान्त भिन्नवचनयोरुपमानोपमेययोरन्वेति । एवं च 'नीलरूपभृत' इति 'निरानन्दितबर्हिण.' इति चोभे विशेषणे एकवचनान्तबहुवचनान्ते तयोरेवाऽन्विते भवत ।

कालस्य भेदो दोषोऽत्र भग्नक्रमतां गतः ॥

अत्र उपमानोपमेयप्रस्तावे । यथा—

सरस्वतीव शरदि प्रससाद प्रिया तव ।

इत्यादौ सरस्वती प्रसीदति न तु प्रससाद इति कालभेदो भग्नप्रक्रमतायां तिरोहितः ।

पुरुषस्य भवेद्भेदो विध्यादेश्च तथा मतः ॥ ७ ॥

प्रथममध्यमोत्तमरूपस्य पुरुषस्याऽप्राप्तप्रापणरूपविधेश्च भेदो विस्खलितबोधजनकतया भग्नप्रक्रमान्तर्भावे मतः । क्रमेण यथा—

अनया कान्तिच्छटया विद्युदिवाऽऽभासि कमलनेत्रे ! त्वम् ।

इत्यादौ विद्युदाभाति न त्वाभासीति सम्बोध्यमानकामिनीनिष्ठमध्यमपुरुषभागोऽस्ति, तस्याऽसम्बोध्यमानविद्युद्विषयतया व्यत्यासात् पुरुषभेदः ।

शेष इव भूमिभारं वहतु भुजस्ते धराधीश ! ।

इत्यादौ भूमिभारवहनविद्यमानत्वाच्छेषो भूमिभारं वहति न तु वहतु इति। अप्राप्तप्रापणरूपस्य विधेरभावात्। एवमादिरूपोऽर्थो यत्रोपमानगतत्वेनाऽसम्भवी तत्रापि विध्यादिभेदो बोध्य.।

ननूपमाप्रयोजकसाधारणधर्म एव कालादिभेदहेतुस्तस्मात्कालादिहेतुभिन्नं शाब्दमाक्षिप्यमाण वा धर्मान्तरमुपादायोपमापर्यवसानं भविष्यतीत्यतो दोषत्वमेव नाऽस्य, क्व पुनः पूर्वोक्तदोषेष्वन्तर्भावः। यत्र तु 'युधिष्ठिर इवाऽयं सत्यवादी सत्य वदति' इति, अत्राऽतीतवर्तमानरूपकालभेदे सत्यपि सत्यवादित्वरूपेण समानधर्मेणोपात्तेनोपमाप्रतीतिरस्खलितैव। कालभेदस्य तत्राऽप्रयोजकत्वादिति चेत्, सत्यम्। परन्तु स्थितश्चेतत्समर्थनं, न तु सर्वथा रमणीयम। अथ वा सहृदया एवाऽत्र प्रमाणम्।

उपमायामसम्भवोऽनुचितार्थत्वेन व्याप्त'। यथा—

भाति पाणितले तन्वि ! कस्तूरीशकल तव।
प्रातरुत्फुल्लपाथोजे तमःखण्डमिव श्रितम्॥

अत्र प्रातःकाले पद्मे तमःखण्डावस्थानमसम्भवीत्यर्थोपनिबन्धनमनुचितम्।

असादृश्यमुपमायामनुचितार्थत्वपर्यवसन्नम्। यथा—

त्वदीय धरणीपाल ! दानपाथोजकारणम्।
पश्यामि करकासारं खड्गशैबालशोभितम॥

अत्र दानस्य पाथोजेन, करस्य च कासारेण, खड्गस्य शैवालेन कश्चिदपि साम्यं नाऽवगम्यत इत्यनुचितार्थता। ननु खड्गस्य शैवालस्य च न किञ्चित् सादृश्यमस्तीति चेत् न, करस्य कासारतुल्यत्वे सिद्धे खड्गस्य शैवालतुल्यता सिद्ध्येत्। न हि करस्य कासारसादृश्यहेतुः कश्चिद्गुणः प्रतीयते, येन खड्गस्य शैवालतुल्यता सिद्ध्येत्।

यद्यपि 'व्यनक्ति निन्दास्तोत्रे यत्' इत्यादिनाऽनुचितार्थत्वस्य शब्दनिष्ठत्वेनाऽभिधानात्कथमनयोर्दोषयोस्तस्मिन्नन्तर्भाव., तथाऽपि काल

लोकप्रसिद्धिविरोधावुपमायामनुचितार्थत्वेन व्यपदिष्टौ, न तु पूर्वोक्ताऽनुचितार्थता ।

उत्प्रेक्षायामपि 'मन्ये ध्रुवेवादयः' शब्दाः सम्भावनं कर्तुं शक्नुवन्ति, न तु यथाशब्दः । तस्य साम्यमात्रप्रतिपादकत्वात् साम्यस्याऽस्यामविवक्षितत्वादित्यवाचकत्वं दोषः ।

अयं भाति धराधीशः करवालभयङ्करः ।
रणे परिगृहीताङ्ग साक्षाद्वीररसो यथा ॥

उत्प्रेक्षितोऽप्यर्थो विविच्यमान सन्नसत्कल्पतयोपाख्यानाऽनर्हस्तत्समर्थनायाऽर्थान्तरन्यासः क्रियते, स वामनकराकृष्यमाणश्चन्द्र इवाऽत्यन्तमसत्य इत्यस्य निर्विषयत्वादपुष्टार्थत्वरूपमनौचित्यम् । यथा—

रविदर्शनहर्षेण प्रोत्फुल्लं भाति पङ्कजम् ।
नूनं मित्रावलोकेन वर्द्धन्ते जगतां मुदः ॥

अत्राऽचक्षुषः पङ्कजस्य दर्शनमेव नास्ति कुतस्तज्जनितो हर्षः, कथं वा तत्समर्थनाय लब्धपदोऽर्थान्तरन्यासः स्यात् । तस्मादुत्प्रेक्षितोऽर्थो भासमानः सन्न काञ्चिदप्यनुपपत्तिमवगाहते किमर्थं तत्समर्थनाय यत्नः ।

समासोक्तिरपि साधारणविशेषणमहिम्नोपमानविशेषमुपपादयति । तस्याऽत्र पुनरुपादानं पुनरुक्ततायामपुष्टार्थतायां वा पर्यवस्यति ।

करेणाऽऽलिङ्गति प्राचीं हरितं तिग्मरोचिषि ।
निःप्रभेन्दुमुखी सद्यो बभूवाऽपरदिग्वधूः ॥

अत्र तिग्मरोचिषः प्राच्याश्च लिङ्गविशेषमहिम्ना 'करेण'इत्यत्र च श्लेषमर्यादया नायकत्वादिप्रतीति, स्तथैवाऽपरदिशः प्रतिनायिकात्वं भविष्यति किमर्थं वधूपदोपादानम् । ननु श्लेषे सत्युपमानोपादानस्याऽऽवश्यकत्वा,दन्यथा श्लिष्टपदोपादानप्रयासो व्यर्थः स्यादिति चेत्, मैवम् । यत्रोपमानोपादानं विना साधारणविशेषणमहिम्ना नोपमानप्रतीतिस्तत्र श्लेषोपमाया अवतारः । यथा—

पृथुलकुचा मदनवती तिलकयुता सालकाननोद्दीप्ता ।
मदकलकोकिलवाणी मधौ वनीवाऽङ्गना जयति ॥

एवमप्रस्तुतप्रशंसायामपि सामान्येन रूपेणोपमानप्रतीतौ सत्यामुपमानोपादान दोषः, स चाऽपुष्टार्थत्वेन पुनरुक्तत्वेन वा व्याप्तः । यथा—

कर्तुं वाञ्छति झिल्लिका परभृतालापानुकारं वने
जम्बूकोऽपि पराक्रमं मृगपतेः सम्प्राप्तुमाकाङ्क्षति ।
भेको निन्दति गर्जितं जलमुचां प्रायः स्वकीयं बलं
जन्तुः क्षुद्रतरो न वेत्ति हिमकृत्स्पर्द्धीव खद्योतकः ॥

अत्र खद्योतस्याऽप्रस्तुतप्रशंसया सामान्यमुखेनाऽवगतौ तदुपादानं व्यर्थम् ।

तदन्येषामेवंप्रायाणामप्यलङ्कारदोषाणां पूर्वोक्तदोषेष्वन्तर्भावो बोध्यः ।

प्रसङ्गादाह—

**क्वचिद् गुणत्वं दोषस्य क्वाऽप्यदोषत्वमुच्यते ॥**

'गुणत्वं' इति मुख्यगुणानुकूलत्वात् दोषस्य गुणत्वव्यपदेश इत्यर्थः ।

**वाच्ये समुद्धते व्यङ्ग्ये गुणः स्याच्छ्रोत्रकाटवम् ॥८॥**

समुद्धते वाच्ये सिंहादौ, समुद्धते व्यङ्ग्ये रौद्रादौ श्रोत्रकटुत्वं गुणः 'समुद्धते' इति । 'काकाक्षिगोलक'न्यायेनोभयत्राऽन्वयि । क्रमेण यथा—

रे शार्दूलगणा ! मनागपि भवद्वासोऽत्र न श्रेयसे
यूयं शूकरयूथपाः ! प्रियतमासार्थेन निर्गच्छत ।
चक्षुःक्रूरकटाक्षवीक्षणपरिक्षिप्ताऽसुमत्तद्विप-
द्रोहोद्रेकनिरासलालसमितः पञ्चाननः क्रीडति ॥

अत्र सिंहे वाच्ये श्रोत्रकटुत्वं गुणः ।

दन्ताकृष्टविदष्टसाऽस्थिपललव्राताऽतिनिर्यन्त्रण-
क्रूराक्रान्तिसमुद्भवत्कटकटत्काराक्रियाभैरवः ।
हस्तव्यस्तशवालिमस्तकसरन्मज्जाम्बुनिर्वापित-
प्रौढिप्राप्तचिताग्निरुद्भटतमः प्रेतोऽयमुज्जृम्भते ॥

अत्र बीभत्सरसे व्यङ्ग्ये गुणत्वं परुषवर्णानाम् ।

## वैयाकरणे वक्तरि श्रोतरि वा श्रोत्रकाटवमदोषः ॥

उभयं यथा—

व्रजन्तीमन्तिके काञ्चिदुदञ्चिन्नयनां सखे ! ।
मृगचक्षुषमद्राक्षं निर्निमेषेण चक्षुषा ॥

अत्र वक्तृश्रोत्रोर्व्याकरणस्य सतताऽऽसङ्गात् परुषवर्णा न श्रुत्युद्वेजकाः ।

## न दोषौ निहतार्थत्वाऽप्रयुक्तत्वे क्वचित् पुनः ॥

यथा—

नेत्रं यः कमलापतेर्जनयति प्रौढप्रमोदावली-
र्यः पाथोजगणेषु यः क्षितिभुजां बीजं जगद्विश्रुतः ।
यं छायापतिमूचिरे कृतधियो यश्चान्धकारापह.
सोऽय सत्फलदायको हिमरुचिः पायादपायाज्जनान् ॥

अत्र हिमरुचिपक्षेपाथोजछायापतिशब्दौ निहतार्थाऽप्रयुक्तौ न दुष्टौ ।

## अश्लीलत्वं गुणः क्वाऽपि ।

स्पष्टम् । शान्तोक्तौ—

दुर्गन्धिशटितक्रव्यसदृशे साधने स्त्रियः ।
रतिर्न दृश्यते प्रेतरङ्कादन्यस्य कस्यचित ॥

यथा वा वेणीसंहारे—

निर्वाणवैरिदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र दुर्योधनादीनां भाव्यमङ्गलसूचनम् ।

कामशास्त्रे गोपनीय वस्तु नानार्थैः पदै सूचनीयमिति राद्धान्तः । यथावा कामशास्त्रे—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वज. पुसः साधनान्तर्विराजते ॥

## सन्दिग्धत्वं तथा भवेत् ॥

'तथा' इति । प्रकरणवशाद्वाच्यविशेषनिर्णयाभावेन यत्र वाक्यस्य व्याजस्तुतिपर्यवसान, तत्र पदानां सन्दिग्धत्वं गुणो भवेदित्यर्थः । यथा—

विलक्षणगृहो लक्ष्मीपरिशीलनवर्द्धितः ।
विराजसे धरापाल ! भूतलेऽहमिव स्वयम ॥

यथा वा—

पृथुकार्तस्वरपात्र भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहन सम्प्रति सममावयोः सदनम ॥

## तत्त्वज्ञे प्रतिपाद्ये गुणो भवेदप्रतीतत्वम् ॥ ९ ॥

यथा—

तमसा दृढपाशेन प्रतिरुद्धो भवान्तरे ।
कुतो रजःपरं सत्त्वमधिरोहत्वयं जनः ॥

## अतिनीचस्वभावेषु ग्राम्यता गुण इष्यते ॥

यथा—

फुल्लाइं ताइं रमणिज्जअराइं दाणिं
मल्लीतरुण (?)मह चित्तपिआइं होंति ।

रूपहि दुद्धदहिभत्तमणोहरेहि
कुंजाइं जाइं सहसा धवलीकुणंति ॥*

अत्र विदूषकस्योक्तौ दुग्धादिशब्दो ग्राम्यः।

## वर्णानां प्रतिकूलत्वं गुणत्वेन मतं क्वचित् ॥ १० ॥

यथा—

रङ्को ! रङ्कजनाय पङ्कजदृशो वृत्तान्तमाख्याहि मे
सा नाऽऽलोकि मयेति शृङ्गचलनव्याजाद्ब्रवीषि स्फुटम्।
वातोद्वेल्लितनीलनीरजदलोद्दामद्युतिद्रोहिणी
तद्दृष्टिर्यदि नेक्षिता निजदृशोः प्राप्तं चलत्वं कुतः ॥

अत्र 'मया नाऽऽलोकि' इत्यनेन क्रुद्धस्य नायकस्योक्तौ दीर्घसमासत्वमुद्धतवर्णगुम्फश्च गुणः।

## न गुणत्वं न दोषत्वं नीरसेष्वस्य दृश्यते ॥

यथा—

पक्षक्षेपणलक्षवन्दनपरैः प्रातः स्तुतः पक्षिभिः
क्षिप्रक्षीणतमोऽन्तरिक्षविलसत्क्षेमक्षमाच्छच्छविः।
क्षिप्ताक्षुद्रकुलक्षणक्षितिजनाक्षैण्यप्रदो भास्करः
प्रक्षुब्धक्षणदाचरक्षयकरोऽक्षेमं क्षिणोतु क्षणात् ॥

नन्वत्र रविविषयकरतिभावोऽस्ति रसपदेन तस्याप्यभिधानादिति चेत्, सत्यम्। नीरसत्वं रसाऽतात्पर्यकत्व,मिह तु कवेरनुप्रासनिर्वाहे तात्पर्यसत्त्वात्।

---

*पुष्पाणि तानि रमणीयतराणीदानीं
मल्लीतरूणां मम चित्तप्रियाणि भवन्ति।
रूपे र्दुग्धदधिभक्तमनोहरैः
कुञ्जानि यानि सहसा धवलाकुर्वन्ति ॥

इतिच्छाया [ संशोधकः ]

समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित् ॥ ११ ॥

'क्वचित्' इति । यत्राऽन्यदेव वाक्यं विधीयते तत्रेत्यर्थः । यथा प्रागुदाहृते 'उद्दामद्युती'त्यादौ 'पाञ्चाली'त्यादेर्ग्रहण वाक्यान्तरविधानाय, न पुनर्विशेषणदानाय । यत्र तु समाप्ते वाक्यार्थे विशेषणं विधीयते तत्र दोषः ।

गुणः पतत्प्रकर्षत्वं कुत्राचित्तु निगद्यते ॥

यथा पूर्वोदाहृते 'उद्दामद्युती'त्यादौ चतुर्थपादे रौद्ररसाभावादनुद्धतारचना गुणः ।

अर्थान्तरसङ्क्रमिते वाच्ये विहितस्य चाऽनुवाद्यत्वे ॥
लाटानुप्रासार्थे कथितपदत्वं गुणो भवति ॥

क्रमेण यथा—

नाट्यं नातिसुखं मदीयरसनारङ्गे रसास्वादन-
स्निग्धे ! लास्यनिधे ! बत प्रतिपदं वाणि ! स्खलन्त्यास्तव ।
उत्प्रेक्षातिशयोक्तिपूर्वकपदन्यासं पुनस्तन्वती
नृत्यस्यत्र यदा तदा भगवति ! स्यात्ताण्डवं ताण्डवम् ॥

अत्र द्वितीयताण्डवपदं लोकानुरञ्जकत्वलक्षणेऽर्थे सङ्क्रान्तम् ।

व्युत्पत्तिः काव्यहेतुः स्यादर्थः काव्यादवाप्यते ।
अर्थाप्त्या जन्यते कीर्तिर्जाता कीर्तिः स्वरास्पदम् ॥

अत्र काव्यादीनामुत्तरोत्तरं प्रति तदा कारणता निर्वहति यदि तेनैव पदेन सर्वनामपदेन वा कथ्यतेऽतो विहितस्याऽनुवाद्यत्वे कथितपदत्वं गुणः ।

सुधांशुचिरुचिद्योतिद्योतिलोकत्रये यशः ।
तव भाति धरापाल ! धरापालङ्कृतानते ! ॥

## न्यूनपदत्वं क्वचिदप्यदूषणं कुत्रचित्तु गुणः ॥

क्रमेण यथा—

एतद्वारिरुहं भवेत्पुनरितः पाथो न सन्दृश्यते
चन्द्रोऽयं हरते दृशौ दिशि सरत्यस्य प्रकाशोऽहनि।
आनन्दः प्रकटीभवत्ययमितः सोऽमूर्तिमान् विश्रुतः
कान्ताऽऽलम्बि मुख किमेतदिति मे चेतो मुहुर्मुह्यति ॥

अत्रोत्तरवाक्यस्य पूर्ववाक्यनिषेधं प्रति हेतुत्वप्रतिपत्तये 'नैतद्यतः' इति पदानि न्यूनानि दातुमुचितानि, विशेषप्रतीत्यजनकतया पुनस्तानि नोपात्तानि, अतो न गुणः। न वा पूर्वप्रतीतिमुत्तरा प्रतिपत्तिः स्थगयत्यतो न दोषः। बाध्यबाधकभावस्त्वर्थादेव लब्ध ।

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
'मा मा मानद! माऽति मामल'मिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥

अत्र 'माऽति' इत्यत्र 'पीडय' इति न्यूनपदस्य रसपोषकतया गुणत्वम्।

## गुणोऽधिकपदत्वं तु धीरैः कुत्राऽपि कथ्यते ॥

यथा—

शिखिपिच्छधरः क एष भित्तौ लिखितोऽस्तीति सखीजनेन पृष्टा।
न न वक्ति पर तु वक्ति राधा वपुरुद्यत्पुलकाङ्कुरच्छलेन ॥

अत्र द्वितीय 'वक्ति' इति पदमन्ययोगव्यवच्छेदाय ।

यथा वा काव्यप्रकाशे—

वद वद जित स शत्रुर्न हतो जल्पन् तव तवाऽस्मीति।
चित्र चित्रमरोदीद्धा! हेति पर मृते पुत्रे ॥

इत्यादौ हर्षशोकाद्याविष्टे वक्तरि अधिकपदत्वं गुणः।

## अपदस्थसमासत्वं गुणः कुत्राऽपि कथ्यते ॥

'रक्तो ! रक्तजनाय पङ्कजदृशो वृत्तान्तमाख्याहि' इत्यादौ कुपितस्योक्तौ 'वातोद्वेल्लित' इत्यादिना समासविरचना गुणः ।

## सङ्कीर्णत्वं गुणः क्वाऽपि सुधीभिः परिगद्यते ॥

यथा—

त्वामेव पश्यति स्वप्ने ध्यायति त्वां च जाग्रती ।
सर्वदा सा कुरङ्गाक्षी जानीहि त्वत्परायणा ॥

अत्र 'जानीहि' इति दृढप्रत्ययोत्पादनाय गुणः ।

## क्वाऽप्यपुष्टत्वमर्थानामदोषः परिकीर्तितः ॥

'अर्थानां' इति बहुवचनमविवक्षितम् । यथा—

कर्णावतंससंशोभी शिरःशेखरवानयम् ।
धनुर्ज्यालक्ष्मणा भूयः शोभते बाहुना रणे ॥

अत्र यद्यप्यवतंसादि कर्णाद्याभरणमेव, तथाऽपि कर्णशिरःशब्दाववतंसादेः कर्णादिसान्निध्यप्रतिपत्त्यर्थम् । धनुःशब्दोऽप्यारूढिप्रतिपत्त्यर्थमुपात्तः । केवलस्तु ज्याशब्दो नारोहणप्रतिपत्तये । यथा—

गतं कुत्र दशग्रीव ! बाहोर्वीर्यं तदाऽस्य ते ।
सहस्रबाहुना गाढं ज्याबन्धोऽस्मिन् कृतो यदा ॥

अत्र निरुपपदो ज्याशब्दः । एवं श्रवणकुण्डलपदमपि श्रवणसान्निध्यबोधनाय बोध्यम् । हारपदेन मुक्ताहार एवोच्यते, मुक्ताशब्दोपादानं हारस्य केवलमुक्ताघटितत्वबोधनाय । तेन मुक्तापदप्रयोगः ।

पुष्पमालेव बालेयं कस्य नामोदहेतवे ।

इत्यादौ मालाशब्देन पुष्पशब्दस्य गतार्थत्वात् पुष्पशब्दोपादानं पुनरुत्कृष्टपुष्पप्रतीतये ।

केचित्तु 'जगाद मधुरां वाचं' इत्यादौ 'जगाद' इत्यनेनाऽवगतार्थस्याऽपि 'वाच' इत्यस्य 'मधुरां' इत्यादिविशेषणदानार्थमुपादानमिच्छन्ति, तन्न । 'जगाद मधुरं' इति क्रियाविशेषणेनोपपत्तौ 'वाच' इत्यस्य सर्वथाऽनुपयोगः ।

यत्र तु गतार्थस्याऽपि क्रियाविशेषणेऽपि नाऽन्वयस्तत्र विशेष्यस्य प्रयोगः कार्यः । यथा—

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥

अत्र 'चरणत्रपरित्राणरहितं व्रजन्' इत्युक्ते सति तुरङ्गादिना गमन सम्भवे तात्पर्यगोचराऽन्वयाऽनुपपत्तेरवश्यं पादाभ्यामिति प्रयोज्यम् ।

ननु शैलाऽधित्यकाकरिकलभकरिबृंहिताऽश्वह्रेषामयूरकेकादिशब्दप्रयोगेष्वधित्यकादिशब्दैर्गतार्थानां शैलादिशब्दानामपुष्टार्थत्वमिति चेत् न, अधित्यकादिषु दुरारोहत्वप्रौढिगाम्भीर्यमांसलत्वमादकत्वादिप्रतीत्यर्थं शैलादिशब्दाः प्रयुज्यन्ते । नन्वेवं यथाकथञ्चित्प्रयोजनसद्भावे कुत्राऽपि दोषो न स्यात् इति चेत्, सत्यम् । स्थितेष्वेतत्समर्थनम्, न तु सर्वथा रमणीयम् । जघनकाञ्च्यादिपदं कविभिरप्रयुज्यमानं कर्णावतंसादिवन्न समाधेयम् ।

## शाब्दिके प्रतिपाद्ये तु न दोषः कष्टता भवेत् ॥१५॥

यथा—

आवयोरिह समानरूपयोरेकशेषमपराविलोकनम् ।
चेद्यधत्त कृतधीर्विधिर्विधिर्द्वन्द्वहूतिमकरोत्तदा कुतः ॥

## विश्रुतेऽर्थे निर्हेतुत्वमदोषः परिकीर्तितः ॥

यथा कुमारसम्भवे—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र 'न भुङ्क्ते' इत्यत्र रात्रौ पद्मनिमीलनं दिवसे चन्द्रस्य विच्छायत्वं हेतू, तयोश्च सुप्रसिद्धत्वादनुपादानं न दोषः ।

## साकाङ्क्षत्वमदोषस्तु कुत्रचित्कथ्यते बुधैः ॥१६॥

यथा—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रसितं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ! ॥

अत्र 'अधाक्षीदभाङ्क्षीत्' इत्यादेरन्वयोऽध्याहारेणैव बोध्यः ।

## सञ्चारिणः स्वशब्दोक्तिरदोषः परिकीर्तितः ॥

यथा 'औत्सुक्येन कृतत्वरा' इत्यादौ त्वरानुभावस्य भयादिनाऽपि सम्भवेऽसाधारण्यं न प्रतीयतेऽत 'औत्सुक्येन' इत्युक्तम् ।

## बाध्यत्वेनोदितो वैरी सञ्चार्यादिर्न दोषभाक् ॥१७॥

आदिशब्दादनुभावविभावौ । यथा—

संन्यासो वरमत्र मे विधुमुखी जायेत नेत्रातिथि—
श्चन्द्रं चूर्णय तप्तकाञ्चनलतातुल्यं तदीयं वपुः ।
क्वाऽहं कुत्र पयोधरैः खलवचो दुर्वारमाचक्षते
चाञ्चल्यं त्यज चित्त ! चञ्चलदृशोऽवस्था भवेत्कीदृशी ॥

अत्र निर्वेदौत्सुक्यामर्षस्मृतिवितर्कशङ्काधृतिचिन्तानां वैराग्यहेतूनामपि बाध्यत्वाऽवगमाच्छृङ्गाराऽविरोधिनां 'भवेत्कीदृशी' इति चिन्तायामेव विश्रामः ।

मुहुर्मुहुः कम्पमानं कृशं पाण्डु वपुस्तव ।
कथयत्यत्र तन्वङ्गि ! रोगं किञ्चिन्नवङ्गनम् ॥

अत्र रोगानुभावादीनां कम्पकार्श्यादीनां बाध्यत्वेनोपात्तानामनुपात्तानां वा प्रकृतरससाधारण्यान्न रसविघातकता ।

यत्र त्वनुभावस्याऽसाधारण्यं तत्र बाध्यत्वाऽनवगमे दोषः ।

ममाऽस्ति सर्वथा तन्वि ! सर्वत्र समदृष्टिता ।
परिहृत्य दृढं मानं प्रयच्छाऽऽलिङ्गनानि मे ॥

इत्यादावनुभावस्य शृङ्गारविरुद्धस्य शृङ्गारे वर्णनमनुचितम् ।

सरोजनयना सौम्या सत्यं सौम्यास्तु सम्पदः ।
मृणालीलतिकातन्तुनश्वरं किन्तु जीवितम् ॥

अत्र जीवनाऽस्थैर्यं शान्तमेव पुष्णाति, अतो बाध्यत्वेनोक्तः शृङ्गारविभावस्तमेव पुष्णाति । तथा चाऽत्र विरुद्धविभावोपादाने न दोषः ।

## अनुकारे तु सर्वेषां दोषाणां स्याददोषता ॥१८॥

यथा—

अद्राक्षं पक्ष्मलाक्षीनां कटाक्षानहमित्ययम् ।
ब्रूते पुनर्गवित्याह पुनर्दैवत इत्यपि ॥

अत्र 'कटाक्षान्'इत्यन्तं श्रोत्रकटुत्वं,'गो'-इत्यत्र च्युतसंस्कृतित्वं, 'दैवतः' इत्यत्राऽप्रयुक्तत्वं च न दोषः । एवमप्यन्येषामालोचनीयमिति ॥

इति श्रीमैथिलश्रीगङ्गानन्दकवीन्द्रकृतौ
काव्यडाकिन्यां पञ्चमी दृष्टिः ॥

